वसुधातनयात् कुयमाब्धिनगाष्टदशेशगतो। १। २। ४। ७। ८। १०। ११। अथ बुधात् चितियुग्मकृतेषु रसग्रहदिक्गिरिशोपग। १। २। ४। ५। ६। ८। १०। ११। ततदनुस्तत एकयमानलवारिधिपर्वतनागदशेशगतो। १। २। ३। ४। ७। ८। १०। ११। अथ सितात्यमपञ्चरसग्रहदिक्शिवगो। २। ५। ६। ८। १०। ११। रविनन्दनतो दहनेषु रसार्कगतः। ३। ५। ६। १२। स्वय लग्नदशात् कुयमाब्धिशरर्त्तुनगदिग्गिरिशोपगतः" । १। २। ४। ५। ६। ७। ८। १०। ११। गुरुरेखाः। ५६। "भृगुः शुभो रवेर्गजेशसूर्यगो। ८। ११। १२। अथ चन्द्रतः क्रमादिपञ्चकाष्टगो शिवार्कगः। १। २। ३। ४। ५। ८। ८। ११। १२। कुजात्त्रिवेदकालगो शिवार्कगो। ३। ४। ६। ८। ११। १२। अथ बुधात्त्रिवाणकालरन्ध्ररुद्रसंस्थितः। ३। ५। ६। ८। ११। गुरोः शराष्टरन्ध्रदिग्महेशग। ५। ८। ८। १०। ११। स्वतः स्वतः कुपञ्चकाष्टरन्ध्रदिक् शिवोपगः। १। २। ३। ४। ५। ८। ८। १०। ११। शनेर्गुणाब्धिपञ्चनागगो दशेशगो। ३। ४। ५। ८। ८। १०। ११। अथ लग्नतः कुपञ्चकाष्टगो शिवस्थितः" । १। २। ३। ४। ५। ८। ८। ११। शुक्ररेखाः। ५२। "शुभः पङ्गुरर्कात् स्मायमाम्भोधिशैलाष्टदिक् शम्भुग। १। २। ४। ७। ८। १०। ११। इन्दुतो रामकालेशगतः। ३। ६। ११। क्ष्मासुताद्दस्त्रिवाणर्त्तुकाष्ठा शिवार्कोपगो। ३। ५। ६। १०। ११। १२। अथ ज्ञतः कालदन्तावनादिस्थितो। ६। ८। ८। १०। ११। १२। जीवतो वाणकालेशमार्त्तण्डयात। ५। ६। ११। १२। स्वतो दैत्यपूज्यादनेहः शिवार्कोपयातः। ६। ११। १२। स्वतो वीतिहोत्रेषु कालेशयातः। ३। ५। ६। ११। स्वतो लग्नतः क्ष्मागुणाम्भोधिषड्दिग्महेशस्थित." । १। ३। ४। ६। १०। ११। शनिरेखाः। ३८।

"राहुः शुभोऽर्काङ्गुजवह्निवेदसुरन्ध्रगो । २ । ३ । ४ । ६ । ९ ।
अथ चन्द्रात् कुरामवेदाङ्ग । १ । ३ । ४ । ६ । ततः कुजा-
द्वह्निबाणाङ्गरन्ध्रगतोऽथ ३ । ५ । ६ । ९ । बुधाच्छशिपक्षवह्नि-
बाणरन्ध्रग । १ । २ । ३ । ४ । ५ । ९ । ततो जीवाद्व्यब्धि-
वेदाङ्गरन्ध्रग । ३ । ४ । ६ । ९ । ततः शुक्रात् पक्षवह्निबाण-
रन्ध्रगत २ । ३ । ५ । ९ । ततः सौरात् पक्षबाणर्त्तुग । २ । ५ ।
६ । ततः ततः शशिवेदबाणरिपुरन्ध्रगोऽथ । १ । ४ । ५ । ६ ।
९ । लग्नाद्देवरन्ध्रदिग्रुद्रघ्न्येन्नत." । ॥ । ९ । १० । ११ । १२ ।
राहुरेखाः । ३९ । "मृगेन्द्रविशाखाभिधानदण्डकेन राहोरष्ट-
वर्गः । सूर्य्यादेकद्विचतुःसप्ताष्टदशैकादशेषु । १ । २ । ४ । ७ ।
८ । १० । ११ । सोमात्त्रिषड्दशैकादशेषु । ३ । ६ । १० । ११ ।
भौमात्त्रिपञ्चषडेकादशेषु । ३ । ५ । ६ । ११ । बुधात् षडष्ट-
नवदशैकादशेषु । ६ । ८ । ९ । १० । ११ । गुरोः पञ्चषडेका-
दशद्वादशेषु । ५ । ६ । ११ । १२ । शुक्रात् षडेकादशद्वादशेषु
६ । ११ । १२ । शनेस्त्रिपञ्चाष्टदशैकादशेषु । ३ । ५ । ८ ।
१० । ११ । लग्नादेकत्रिचतुःषड्दशैकादशेषु" । १ । ३ । ४ ।
६ । १० । ११ । एवं लग्नरेखाः । ३७ । "इति निगदितमिष्टं
नेष्टमन्यद्विशेषादधिकफलविपाकं जन्मभात्तत्र दद्युः । उप-
चयगृहमित्रस्वोच्चगाः पुष्टमिष्टं त्वपचयगृहनीचारातिभे नेष्ट-
सम्पत् । यावती यावती रेखा ग्रहाणामष्टवर्गके । तावतीं
द्विगुणीकृत्य अष्टाभिः परिशोधयेत् । अष्टोपरि भवेद्रेखा
अष्टाभ्यन्तरबिन्दवः । अष्टाभिस्तु समो यत्र तत्सम परि-
कीर्त्तितम् । रेखापक्षाच्छुभे देया बिन्दवश्चेतरत्र तु । रेखा
बिन्दु समानो चेत् समस्तत्र निगद्यते । रेखाधिक्ये शुभं ज्ञेयं
तद्बिन्द्वोरशुभम् । श्रीरानन्दस्तया ज्ञेयो भोगो राज्यं
भवेत्तया । अक्षिणोऽथ विपक्षेव हानिर्मृत्युर्भवेत्तथा । दशादि-

रेखा द्वादिबिन्दोः फलान्येतान्यनुक्रमात्। रेखायां वत्सरो ज्ञेयः सार्द्धसप्तदिनं समे। अष्टवर्गदमायुः स्यात् दिनं चतुर्षु बिन्दुषु"॥ इत्यायुर्दायः। इत्यष्टवर्गः। नन्दी। "अष्टवर्ग-शुभैः धीमान् कर्म कुर्य्यान्नभश्चरैः। गोचरस्थैस्तदप्राप्तौ तद-प्राप्तौ च वेधगैः॥ व्रतारम्भे विवाहे च यात्रायां क्षुरकर्मणि। अविशुद्धाष्टवर्गस्य समस्ता निष्फलाः क्रियाः॥ सततं दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम्। भावफलं प्रथमार्द्धे दृष्टिफलान्यर्द्धभुक्तेषु"॥ इत्यष्टवर्गार्थकथनम्।

"लाभविक्रमखषट्सु तः स्थितः शोभनो निगदितो दिवाकरः। खेचरैः सुततपो जनान्त्यगैर्व्योर्किभिर्यदि न विध्यते तदा। सूनजन्मरिपुलाभखस्थितश्चन्द्रमाः शुभफलप्रदस्तदा। खान्त-जान्त्यसूतिबन्धुधर्मगैर्विध्यते न विधुर्यदि खगैः। विक्रमाय-रिपुगः कुजः शुभः स्यात्तदान्त्यसुतधर्मगैः खगैः। चेन्न विद्ध इनसुतस्त्वसौ किन्तु धर्मादिपिना न विध्यते। स्वाम्बुगन्तु-न्दतिखायगः शुभो सदा न खलु विध्यते यदा। आत्मज-त्रिनवकायनैधनप्रान्त्यगैर्विविधुभिर्नभश्चरैः। स्वाध्यायधर्म-तनयद्युनस्थितो नाकनायकपुरोहितः शुभः। रिपुफरन्ध्रखजल-त्रिगैर्यदा विध्यते खगनचारिभिर्न हि। चासुताष्टमतपो-व्ययायगो। १। २। ३। ४। ५। ८। ९। १२। ११। विद्ध चास्फुजिदशोभनः स्मृतः नैधनास्ततनुकर्मधर्मधीलाभवैरि-षड्नस्थखेचरैः। ८। ७। १। १०। ९। ५। ११। ६। ३। एवमत्र खचराव्यधान्विताः सत्फलं न हि दिशन्ति गोचरे। वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशन्त्यलम्। नो विदन्ति खचरव्यधक्रमं ये प्रशस्तविदो हि गोचरे। ते स्वपापवचनभाषिणो जना यान्ति हास्यमपकीर्तिलाञ्छिताः"॥ सप्तानां ग्रहाणां दक्षिणवेधवामवेधौ "ऋक्षसन्धिगताः खेटा

राशिसन्धिगतास्तथा। पश्चमादेः फलं दद्युर्वक्रे च विपरीतकम् ॥ लग्नेशो यदि वक्री स्यात् पुंसः कार्य्येषु वक्रता। लग्नेशेऽस्तं गते मर्त्यो दुःखादिव्याधिसंयुतः ॥ असत्फलः सौम्यनिरीक्षितश्च शुभप्रदश्चाप्यशुभेक्षितश्च। तौ निष्फलौ द्वावपि खेचरेन्द्रो यः शत्रुणा स्वेन निरीक्षितश्च ॥ सुनीचगेऽस्तगेऽपि वा रिपोर्गृहे स्थिते ग्रहे। वृथाफलं प्रकीर्त्तितं समस्तमेव सूरिभिः" ॥ वराहस्तु "सूर्य्याच्छन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ"। दलं अर्द्धं फलस्येति शेषः। "जन्मराशेः शुभः सूर्य्यस्त्रिषष्ठदशलाभगः। द्विपञ्चनवमोऽपीष्टस्त्रयोदशदिनात् परः ॥ रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ। क्षौरं तारकशुद्ध्यैव चन्द्राश्रितं कर्म ॥ सदा सर्वेषु कार्य्येषु चित्तशुद्धिर्विशेषतः। सितेन्दुबुधजीवानां वाराः सर्वत्र शोभनाः। भानुभूसुतमन्दानां शुभकर्मसु केष्वपि। कुर्य्यान्मङ्गलपौष्टिकानि नृपतेर्याभिषेको तथा ॥ शेषा भेषजवह्निकर्मकरणं चारोग्यकर्माणि च। विद्यादानव्रतानि हवनं शिल्पं रणं साहसं स्त्रीयात्राकरणे दिने दिनपतेर्लग्ने स्थिते वा रवौ। रत्नस्नानविषास्त्रकर्महुतभुक् कार्य्ये विवादं रणं कुर्य्याद्दन्तविधिं सदुष्टदमनं सेतुप्रभेदं तथा। द्रुमच्छेदनभेदनानि मृगयां चौर्य्यं तथा साहसं सेनान्यं खनिकर्मधातुकरणं भौमस्य लग्नेऽह्नि वा। स्थाप्यं समाप्यं क्रतुदानकार्य्यं गृहे प्रवेशो नगरे पुरे वा। भौमीशकार्य्यं गजवाजिबन्धो दिने प्रसिध्यन्ति शनैश्चरस्य" ॥

वारफलम्। "व्रतसुनियमयरमज्जनारामकर्त्तृषु भास्करादिवारार्द्धे। प्रभवति हि वारवेला न शुभाशुभकार्य्यकरणाय" ॥ वारवेला। "कामच वेदारवितः शराग्निकामाननागाब्धयो शशेन्दु। दिने निशायामनुवेदनेत्रगोषु रामाग्निपदन्तिनो

च"॥ कालवेला। "वेदा ४ भद्रेषु ५ गैला ७ मुनि ७ नयन २ रसा ६ युग्म २ षट् ६ कामबाणा ५ वाण ५ शीतांशु १ वेदा ४ वसु ८ मुनि ७ चरद्रक् ३ पाणिवेद ४ दयानि २ पष्ठाष्टेकं दिनेशात् क्रमश इह दिने मन्त्रिचक्षेश्वरोक्तः पूर्वयातार्द्धयामः कुलिक इह परो मध्यमश्चेति कालः"॥ वार-कालकुलिकवेलाकथनम्। विशेषतः कुलिकवेलाप्रयोजनन्तु "जपित्वासितगुञ्जानां कुडवं कुलिकोदये"। इत्यनेन नव-दुर्गामन्त्राभिचारकर्म्मणि सारदायामुक्तम्। तट्टीकाकारराघव-भट्टस्तु। "मन्वर्कोदिग्वसृतुवेदपक्षैरर्काम्मुहूर्त्तैः कुलिका भवन्ति। दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्म्मसु शोभनेषु" निरेकैः पूर्व्वोक्तमन्वादिमुहूर्त्तैरेकोनैरित्यर्थः। "यात्रायां मरणं काले वैधव्यं पाणिपीडने। व्रते ब्रह्मवधः प्रोक्तः सर्व्वं कर्म्म ततस्त्यजेत्॥ शिशिरपूर्व्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदा-मरम्। भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुताञ्च सा॥ सौम्यायने कर्म्म शुभं विधेयं यद्गर्हितं तत् खलु दक्षिणे तु" सौम्यायनेन शुक्लः कृष्णो याम्यायनेन सम उक्तः। फलतः कर्मतोऽपि पक्षयोर्गर्गादिभिर्मुनिभिः। "नन्दा भद्रा जया-रिक्ता पूर्णा च नाम सदृशफला। न्यूनसमेष्टाः शुक्ले कृष्णे तिथयः प्रतीपास्ताः। सदैव दर्शे पितृकर्म्म मुक्ता नान्यद्विद-ध्यात् शुभमङ्गलानि। तिथिफलम्।

"तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्भवत्यवमदिनम्। त्रिदिनस्पृक्तिथिस्त्रयस्पर्शनादत्र"॥ अवमत्र्यहस्पर्शौ। कौर्मे पाद्मेऽपि। "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः"। वशिष्ठः। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"॥ साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्म्मपरम्। "अधिमासे दिनपाते

धनुषि रवौ मानुलङ्घिते मासि। चक्रिणि सुप्ते कुर्याची माङ्गल्यं विवाहञ्च" ॥ इति भीमपराक्रमात् दिनपाते दिनक्षये। "त्र्यहस्पृशं नाम यदेतदुक्तमत्र प्रयत्नः क्षतिभिर्विधेयः। विवाहयात्रा शुभपुष्टिकर्म सर्वं न कार्यं त्रिदिनस्पृशि तु ॥ आद्यास्ततः क्रियपूर्वकाणामेषां चतुर्णामपि पञ्चमी स्यात्। परा: परेषां परतस्तथैषा सक्रूरराशेरशुभा तिथिः स्यात्" ॥ मेषे चेत् पापग्रहस्तदा प्रतिपद्दुष्टा वृषे चेत् द्वितीया मिथुने तृतीया कर्कटे चतुर्थी चतुर्षु पञ्चमी। एवं सिंहादौ षष्ठ्यादयः।

"अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षस्तथा चार्द्रा पुनर्वसुकपुष्यकौ ॥ अश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनी। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका ॥ ज्येष्ठा मूलं तथाषाढे पूर्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषाख्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्" ॥ नक्षत्रकथनम्। "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः। योऽन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः। शक्रो निऋर्तिस्तोयं विश्वविरिञ्चो हरिर्वसुर्वरुणः ॥ अजपादो हि अप्नः पूषा चेतीश्वरा भानाम्" ॥ विशाखायाः शक्राग्नीमिलितदेवतात्वम् अभिजितो भिन्नत्वेन अष्टाविंशतिता तत्र वर्ण्यते। नक्षत्राधिपकथनम्।

"उग्रः पूर्वमघान्तका ध्रुवगणस्तीक्ष्णुत्तराणि स्वभूर्दातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः। चित्रा मित्रमृगान्त्यभं मृदुगणस्तीक्ष्णो हि रुद्रेन्द्रयुक्। मिश्रोऽग्निः सविशाखभः शुभकराः सर्वे स्वकृत्ये गणाः" ॥ गणकथनम्। "वह्निपवहिंयमपित्रविशाखायुतं पूर्वात्रयं शतभिषा च नवाम्बुड्रुनि।

एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि" ॥ अधोमुखनचत्रकथनम्। "रविः स्थिरः शीतकरश्चरश्च महीज उग्रः शशिजश्च मिश्रः। लघुः सुरेज्यो भृगुजो मृदुश्च शनिश्च तीक्ष्णः कथितो मुनीन्द्रैः॥ शशाङ्कतारयोः शुद्धिर्विचार्य्या सर्वकर्मसु। ग्रहाणामपि सर्वेषां तच्छुद्धौ फलदातृता"॥ श्रीपतिसमुच्चये। "ताराचन्द्रबले प्राप्ते दोषायान्ये भवन्ति ये। ते सर्वे विलयं यान्ति सिंहं दृष्ट्वा गजा इव॥ जन्मसम्पत् विपत्क्षेमः प्रत्यरिः साधको वधः। मित्रं परममित्रञ्च जन्मभाद्य पुनः पुनः॥ सर्वमङ्गलकार्य्याणि त्रिषु जन्मसु कारयेत्। विवादयाद्दभैषज्ययात्राचौरादि वर्जयेत्॥ यात्रायां पथि बन्धनं क्षपिविधौ सर्वस्व नाशो भवेत्। भैषज्ये मरणं तथा सुनियतं दाहो गृहारम्भणे॥ चौरे रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा। वादे वृद्धिविनाशनं युधि भयं प्राप्नोत्ययं जन्मभे॥ पापाख्या तु त्रिविधा पञ्चचतुर्दशविंशतिस्त्रियुता। त्रिविफला दृष्टिकरी विनाशसंज्ञा क्रमात् कथिता"॥

"जन्माद्यं कर्म ततोऽपि दशमं सांघातिकं षोडशभम्। समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम्॥ आद्यात्तु पञ्चविंशं मानसमेवं नरः षडृक्षः स्यात् नवनक्षत्रो नृपतिः स्वजातिदेशाभिषिक्तैः"॥ ज्ञात्वर्चस्तु। "पूर्वात्रयं सानलमग्रजानां राज्ञान्तु पौष्णेन सहोत्तराणि। सपौष्णमित्रं पितृदैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम्॥ आदित्यहस्ताभिजिदश्विभानि तान्यन्त्यजातेः प्रभविष्णुतायाम्"॥ देशम् देशनामर्क्षम्। नाडीनचत्राणि। "देहादेहार्थहानिः स्याज्जन्मर्क्षे उपतापिते। कर्मर्क्षे कर्मणां हानिः पीडामनसि मानसे॥ मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके तथा। सततं

सामुदयिके मित्रभृत्यार्थसंचयः॥ वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्"॥ नाडीनक्षत्रफलम्। "जातिभे कुलनाशः स्याद्राज्याभिषेकभे। देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम्॥ यस्मिन् राजाभिषिक्तो भवति तद्राभिषेचनिकभम्। च द ख ए कृत्तिका चो व वि वु रोहिण्योत्यादिदेशभम्॥ सर्वेषां पीडायां दिनमेकमुपोषितोऽनलं जुहुयात् सावित्र्या क्षीरतरोः समिद्भिरमरद्विजानुरतः"॥

अथ ग्रहणम्। "भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः। चतुष्पादान्तरे चन्द्रस्तदा ग्रस्यते ग्रहः॥ यस्मिन् ऋक्षे रविस्तस्माच्चतुर्दशगतः शशी। पूर्णिमा प्रतिपत्सन्धौ राहुणा ग्रस्यते शशी"॥ तस्मात्तमारभ्य परतो वा। "कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते। ततस्त्रयोदशे सूर्य्ये राहुणा ग्रस्यते रविः"॥ मासर्क्षं वैशाखज्यैष्ठादौ विशाखा ज्येष्ठादि एतदपि भत्रिपादान्तरे सति राहोः पादभोगश्च मासद्वयेन। "रविभौमनवांशे च निरभ्रं ग्रासमादिशेत्। बुधसौरिनवांशे च मलिनं रुद्रवर्णम्॥ गुरोरंशकमासाद्य दृश्यते सबलाहकः। शशिशुक्रनवांशे च प्राहट् काले महज्जलम्॥ चन्द्रवाच्यस्य भूतौ तौ दृश्येते छादिताम्बरौ"॥ तौ चन्द्रार्कौ। कृत्यचिन्तामणौ वराहः "श्वेते क्षेमसुभिक्षं ब्राह्मणपडाच्च निर्दिशेद्राहौ। अग्निभयमनलवर्णे पीडा हुताशवृत्तीनाम्॥ हरिते रोगोऽनुतापः शस्यानामीरितो ध्वंसः। कपिले शीघ्रगसत्त्वम्लेच्छध्वंसोऽथ दुर्भिक्षम्॥ अरुणकिरणानुरूपे दुर्भिक्षं वृष्ट्यो विहगपीडा च। धूम्राभे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिश्च। कापोतारुणकपिले श्यामाभे च क्षुद्भयं विनिर्दिशेत्"॥ कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च। "विमलकमलपीताभो भवेद्वैश्यद्वेषो सुभिक्षाय। सार्चिष्म-

त्वग्निभयं गैरिकरूपे च युद्धानि ॥ दूर्वाकाण्डश्यामे हारिद्रे च विनिर्दिशेत् मरकम् । पवनिभयसम्प्रदायो पाटलकुसुमोपमो राहुः" ॥ राजमार्त्तण्डे । "सप्ताष्टजन्मभेषाद्यचतुर्थ दशमे विधौ । त्रिजन्मनि त्रिनिधने न कुर्य्याद्राहुदर्शनम् ॥ दृष्टस्तु जनयेन्नीतिं क्लेशं रोगं धनक्षयम् । दैवात्तत्र विधुं दृष्ट्वा दद्यात् स्वर्णं द्विजातये" ॥ ग्रहणग्रहपरिपीडितनाडीनक्षत्रदोषोपशमनाय । "सह शतपुष्पैः स्नायात् फलिनी फलचन्दनोशीरैः" । शतपुष्पा शोलुफा इति ख्याता फलिनी प्रियङ्गुः फलं जातीफलम् उशीरम् वीरणमूलम् । "ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा । भास्करग्रहणे दद्यात् नाडीदोषोपशान्तये ॥ घृतकुम्भोपरिनिहितं शङ्खं नवनीतपूरितं दद्यात् । नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे ॥ यस्य राशौ ग्रहाः पञ्चाथवा सप्त नराधिप । ग्रहणं चन्द्रसूर्य्यस्य ग्रहैवाष्टमसंस्थिते ॥ बलिदानं प्रकर्त्तव्य मातृणा पूजन हितम् । सूर्य्यस्याभ्यर्चनं कार्य्यं शिवस्याशुभनाशनम्" ॥ वराहसंहितायां "मध्यावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ । सर्वग्रस्तौ च दुर्भिक्षमरकदौ पापसंदृष्टौ । मुक्ते सप्ताहान्तः पांशुनिपातोऽर्थसंक्षयं कुरुते । नीहारो रोगभयं भूकम्पः प्रचुरनृपमृत्युम् । उल्कामन्त्रिविनाशं नानावर्णाघनाशभयमतुलम् । स्तनित गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीडाम् । परिवेशोरुकपीडां दिग्दाहो नृपभयञ्च साग्निभयम् । रुक्षो वायुः प्रवलश्चौरसमुत्थ भयं धत्ते । निर्घातः सुरचापो दण्डश्च चुडुयं सपरचक्रम् । ग्रहयुद्धे नृपयुद्धं केतुश्च तथैव निर्दिष्टः । अविकृतसलिलनिपातैः सप्ताहान्तः सुभिक्षमादेश्यम् । यच्चाशुभं ग्रहणजं तत् सर्वं नाशमुपयाति । राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते तस्मादेद्दुता-

शशाङ्क रसाः कल्याणदा राशयः। मध्यस्था रविशायकाङ्ग-दशमाः सामान्यभोगप्रदा युग्मान्मौ तुरगाष्टमः खलुः नृणा यच्छन्ति नेष्ट फलम्। क्रूरग्रहे नाम्रितमन्वितञ्च मोक्षञ्च-मुत्पातनिपीड़ितञ्च। यच्च तयोपग्रहदूषितञ्च विवर्जयेदुद्ध-हनादिकार्य्ये"। उपग्रहो वक्ष्यते सर्व्वतो भद्रे। "विवाहे विधवात्वञ्च गमनेन निवर्त्तनम्। कृषिञ्च निष्फला ज्ञेया वापितं न प्ररोहति। यत् किञ्चित् कुरुते कर्म्म तत् सर्व्वं निष्फलं भवेत्। केचिदाहुर्य्यद्दिनिष्ठेत् यस्मिन् पादे शुभप्रदः। सपादः पौष्यते शेषाः पादास्तु शुभलक्षणाः। शिवभुजगमित्र-पितृवसुजलविश्वविरिञ्चिपङ्कजप्रभवाः। इन्द्राग्नीन्द्रनिशाच-रवरुणार्य्यमयोनयश्चाह्नि। ६। ८। १७। १०। २३। २०। २१। ०। ४। १८। १६। १८। २४। १२। ११। वद्धोऽजोऽहि-र्बुध्नः पूषा ध्यासतकाश्विधातारः। इन्द्रदितिगुरुहरिरविलष्ट्र-निलाख्याः क्षणा रात्रौ। ६। २५। २६। २७। १। २। ३। ४। ५। ७। ८। २२। १३। १४। १५। पञ्चः पञ्चदशांशो-रात्रेश्चैवं मुहूर्त्त इति संज्ञा। नक्षत्रे यद्विहितं तत् कार्य्यं तन्मुहूर्त्तेऽपि। ववबालवकौलवतैतिलगरवणिजाः सविष्टयः सप्त। शकुनि चतुष्पदनागा किन्तु घ्रुव प्रवाणि करणानि। शुक्लादितिथिशेषार्द्धात् पञ्चमे तत्तुरीयके। चापस्ताद्धात् क्रमेण स्थरष्टावृत्त्या ववादयः। एकादश्यावतुर्थ्याश्च शेषार्द्धे शुक्लपक्षके। अष्टमी पौर्णमास्योश्च पूर्व्वार्द्धे विष्टिरीरिता। कृष्णपक्षे तृतीयाया दशम्याश्च परार्द्धतः। सप्तम्याश्च चतुर्द्दश्याः पूर्व्वार्द्धे विष्टिसम्भवः। विहाय विपरीतार्द्धाय विष्टि सर्व्वत्र वर्ज-येत्। विष्टिशेषे विदण्डे हि पुच्छे कार्य्यं जयावहम्"। कर्म्मप्रकाशे। "नाडास्तु पञ्चवदन गलकस्तथैकावक्षो दशैक-सहिता नियतं चतस्रः। नाभिः कटिः षडथ पुच्छलता च

तिस्रो विष्टेर्ध्रुवं निगदितोऽङ्ग विभाग एषः। मुखे कार्य्यध्वस्तिर्भवति मरणञ्चाथ गलके धनध्वानिर्वक्षस्य कटितटे बुद्धिविलयः। कलिर्नाभौदेशे विजयमथ पुच्छे च जगदुःशरीरं भद्रायाः पृथगिति फलं पूर्वमुनयः। मनुवसुमुनितिथि युगदशशिवगुण सङ्ख्यासु तिथिषु" । १४ । ८ । ७ । १५ । ४ । १० । ११ । ३ । पूर्वाम्नया। "यायाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्वशुभदा"। पूर्वाम्नया पूर्वाम्नयादि दिङ्मुखी भवतीत्यर्थः। "एकेन हीना द्विगुणा तिथिस्तु समार्द्धमिष्ट करणं ववादि। पूर्वेपरेऽप्येवमयं विशेषो द्विसंगुणा चन्द्रविवर्जिता च। किन्तु प्रसन्नं करण प्रदिष्टमादेशिथेरादिदले सदैव। उपान्त्यशेषे शकुनिस्तु दर्शे पूर्वे चतुष्पादपरे च भागः"। करणकथनम्। "इन्द्रकमलजमित्रार्य्यमभूश्रियः सयमावबादेः। कलिहयफणिमारुता पतयः शकुन्यादेः" । ववाद्यधिपकथनम् "पौष्टिकस्थिर शुभानि ववाख्ये बालवे द्विज हितान्यपि कर्मकौलवे प्रमदमित्रविभाग तैतिले शुभगतान्वयकर्म। गरे च बीजा श्रयकर्षणानि वणिज्यपि स्थैर्य्यवणिक्क्रिया च। न सिद्धिमाप्नोति कृतञ्च विष्ट्या विषाभिघातादिषु तत्र सिद्धिः। मन्त्रौषधानि शकुनौ च सपौष्टिकानि गोदि प्रराज्यपितृकर्मचतुष्पदे तु। सौभाग्यदाकृषकृति ध्रुवकर्मनागे किन्तुघ्नमाप्नि शुभपौष्टिकमङ्गलानि। विष्कुम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा। अतिगण्ड सुकर्मा च धृतिः शूलस्तथैव च। गण्डा वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा। वज्रयासृक् व्यतीपातो वरीयान् परिघः शिवः सिद्धः साध्य. शुभ. शुक्लो ब्रह्मेन्द्रो वैधृतिस्तथा। परिघस्य त्यजेदर्द्धं शुभकर्म ततः परम्। त्यजेदौ पञ्च विष्कुम्भे सप्त शूले च नाड़िकाः। गण्डव्याघातयोः षट् च नवहर्षण वज्रयोः वैधृति व्यतिपातो च समस्तौ परिवर्ज-

येत् । ज्ञेया यथार्थनामानो योगाः कार्य्येषु शोभनाः । न भक्रमगुणसम्पन्नमप्यतेऽल्पैर्दोषैर्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु । प्रभवति हि न दोषो भूरिभावे गुणानां सलिललव इवाग्नेः सप्रदोषेन्धनस्य । गुणशतमपि दोषः कश्चिदेकोऽतिदुष्टः क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति । घटमिव परिपूर्णं पञ्चगव्येन सद्यो मलिनयति सुराया बिन्दुरेकोऽपि सर्वम्” ।

अथ नाम्ना नक्षत्रज्ञानार्थं शतपदचक्रमाह । “चक्रं शत-पदं वक्ष्ये कथांशाक्षरसम्भवम् । नामादि वर्णतो ज्ञेया ऋक्ष-राश्यंशकास्तथा । तिर्य्यगूर्द्धगता रेखा रुद्रसंख्या लिखेद्बुधः । जायते कोष्ठकानाञ्च शतैकं १०० नात्र संशयः । अ व क ह डा ऐशान्यां म ट प र ता हरिति चाग्नेय्यां न य भ ज खा नैरृत्यां ग स द च ला वायव्याम् । पञ्च पञ्च क्रमेणैव विंशवर्णान् प्रयोजयेत् । पञ्चस्वरसमा योगे एकैकं पञ्चधा कुरु । अव-र्णाद्यास्तथा ज्ञेयाः मध्यस्वर युतास्तथा । सजातीयैक्यमा-श्राय पञ्चस्वरविनिर्णयः । ऋदृलृतोरप्यकारेण योगसख्य परि-ग्रहः । कुर्य्यात् कुपुभद्रस्थाने चोणि वोणशराणि च । कुघ-ङछा भवेत् स्तम्भे रौद्रे त्वीशानगोचरे । धुवथठा भवेत् स्तम्भे हस्ते चाग्नेय मण्डके । भुधफ भवेत् स्तम्भे पूर्व्वाषाढे च नैरृते । दृथझञा भवेत् स्तम्भे वायव्ये भाद्र उत्तरे । एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः । धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुर-क्षरैः । साभिजिन्त्यंशकास्तत्र शतैकं द्वादशाधिकम् । ग्रह-चांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः । तत्रस्थो वेधयेत् सम्यक् पुंसो नामादिमाक्षरम् । सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः । मिश्रैर्मिश्रफलं तत्र निर्विघ्नेन शुभाशुभम् । यदाद्यं सर्व्वतो भद्रे ग्रहोपग्रहवेधतः । शुभाशुभफलं सर्व्वं तदिहापि विचिन्तयेत् । पञ्चस्वरा अइउएओकारास्तैर्योगे धिष्ण्यानि

नक्षत्राणि। अत्र चतुर्भिर्वर्णैरेकं नक्षत्रं यथा। चडचण ३। ववितु। ४। वेवोककि। ५। कुघङछ। ६। केकोहहि। ७। हुहेहोड। ८। डिडुडेडो। ९। ममिमुमे। १०। मोटटिटु। ११। टेटोपपि। १२। पुषणठ। १३। पेपोररि। १४। रुरे-रोत। १५। तितुतेतो। १६। ननिनुने। १७। नोययियु। १८। येयोभभि। १९। भुधफढ। २०। भेभोजजि। २१। जुजेजोख। ०। खिखुखेखो। २२। गगिगुगे। २३। गोस-सिसु। २४। सेसोददि। २५। दुथझञ। २६। देदोचचि। २७। चुचेचोल। १। लिलुलेलो। २। अत्र युक्त बकार-युक्तेन ज्ञेयः। ङ्रस्वेन दीर्घो ज्ञेयः तालव्यशकारेण दन्त्य सकारो ज्ञेयः। इति शतपदचक्रम्।

अथ चन्द्रताराद्यशुभप्रतीकारः। "कार्मं कुर्य्यात् फलाबाप्तिं चन्द्रादिशोभने बुधः। शुभकाले त्विदं सर्वं नार्त्तः कालमपेक्षते॥ चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सितसत्कुलाञ्च। धान्यञ्च दद्यात् करणेऽथवारे योगे तिलान् हेम सर्वञ्च लग्ने॥ योगस्य हेम करणस्य च धान्यमिन्दोः शङ्खञ्च तण्डुलमयो तिथिवारयोश्च। तारावलाय लवणान्यथ गाश्च राशिंर्द्यात् द्विजाय कनक शुचि नाडिकायाः"॥ वामनपुराणे। "विष्टयो व्यतीपाताश्च येऽन्ये दुर्नीतिसम्भवाः। ते नाम स्मरणाद्विष्णो-र्नाशं यान्ति महात्मनः॥ लवणैर्युवतिप्रतिमामभिनववस्त्रोपदिते मत्रालिख्य। तारादोषोपशमनाय द्विजाय दद्याद्विशुद्धये॥ एक विपञ्च सप्त द्विजाय दद्यात् पञ्चानि लवणस्य। क्रमशो जन्मनि विपदि प्रत्यरिमरणाख्यतारासु। पञ्चन्तु लौकिके-र्मानैः साष्टरक्तिहिमाषकम्॥ तोलकत्रितयं ज्ञेय ज्योतिर्व्वः स्मृतिसम्मतम्। विपत्तारे गुडं दद्यात् शाकं दद्याद्धिजन्मनि॥ प्रत्यरौ लवणं दद्यात् निधने तिलकाञ्चनम्"॥ राजमार्त्तण्डे

ग्रहदोषे द्रव्यधारणमाह। "दोषो न स्याद्ग्रहाणामशिशिर किरणे ताम्रमिन्दौ च शङ्खं पृथ्वीपुत्रे प्रवालं शशधरतनये शातकुम्भं भुजेन। देवाचार्ये च मुक्ता मणिरसुरगुरौ सीसकं सूर्य्यसूनौ राहौ सारं गिरीशा कमलजतनये राजपट्टं विभर्त्तुं"। शातकुम्भं सुवर्णम्। राजपट्टं कर्पूराणीति प्रसिद्धम्। गिरीशा सारं लौहं गिरिसारस्तु विज्ञेयो लौहे मलयपर्वते इति त्रिका ण्डशेषात्। "यद्यद्ग्रहस्य यद्द्रव्यं तत्तस्मिन् विषमे स्थिते। दद्यात् सत्कृत्य विप्रेभ्य स्वयञ्च बिभृयात् सदा"॥ बुद्धिप्रकाशे "त्रिशूली खोरिकामूलं गोजिह्वा हृद्दारकम्। ब्रह्मयष्टी सिंहपुच्छी वाप्याल चन्दनं सितम्॥ धत्तगन्ध क्रमात् सूर्य्या द्याद्दोषोपशान्तये। ताम्रादीनामभावे तु स्वयञ्च दक्षिणे भुजे"॥ त्रिशूली बिल्व गोजिह्वा अनन्तमूलं हृद्दारकं चोर ताडकं सिंहपुच्छो रामवासकः। "श्वेतं वास सिता धेनु शङ्खो वा चौरपूरितं। देयो वा रजतश्चन्द्रश्चन्द्रदोषोपशान्तये॥ सिद्धार्थलोध्ररजनीद्वयमुस्तधान्य लामज्जक मफलिनी सवचा च मांसी। स्नानं कुरु ग्रहगणप्रशसाय नित्यं सर्व्व रविप्रभृतय सुमुखो भवन्ति"॥ लामज्जक वीरणमूलम्। "श्मशाने सङ्कटे दुर्गे चौरव्याघ्रादिपीडिते। कान्तारे प्राणसन्देहे विषवह्नि जलेषु वा॥ राजादिभयसन्त्रासे ग्रहरोगादिपीडिते। स्मृत्वा तं पुरुषं सर्व्वैरापदा विप्रमुच्यते"॥ ॥ नरसिंहम्। 'देव ब्राह्मणपूजनात् गुरुवच सम्पादनात् प्रत्यह साधूनामथ भाष णात् श्रुतिवच श्रेय कथाकीर्त्तनात्। होमादध्वरदर्शनात् शुचिमनोभावाज्जपाद्दानतो नो कुर्व्वन्ति कदाचदेव पुरुषस्यैव ग्रहा पीडनम्'॥ गर्गः। शतमिन्दुस्तरु भौमो द्वाविंशद् भृगुनन्दन। पञ्चपञ्चाशतो जीव सौरस्तु सप्तसप्तति॥ तथार्को द्वादश बुध षोडश परिकीर्त्तितम्। इराज क्रूर

खचरा ददते च शुभग्रहाः" ॥ पञ्चाशतः पञ्चसार्द्धशतद्वयमिति यावत् । अथ नवानां ग्रहाणां दानानि । "सूर्य्ये धेनुश्च ताम्रञ्च गोधूमं रक्तचन्दनम् । चन्द्रे चन्दनशङ्खौ च वस्त्रञ्च तिलतण्डुलान् ॥ कुजे हयः प्रदातव्यो रक्तवस्त्रं गुडौदनम् । बुधे कर्पूरसुद्गञ्च हरिद्रस्त्रं हिरण्यकम् ॥ पीतवस्त्रद्वय जीवे हरिद्राञ्जनशालि च । भार्गवः शुक्ले सितो देयः शुक्लधान्यानि यानि च ॥ शनौ च सतिला देया कृष्णा गौर्दीर्घमुत्तमम् । राहौ च महिषीछागौ माषाश्च तिलसर्षपाः ॥ चजामेषौ च दातव्यौ केतौ चान्नञ्च मिश्रितम् । स्वर्णं गोविप्रपूजाभिः सर्व्वेषां शान्तिरुत्तमा" ॥

तिथ्यादीनां क्रमेण बलवत्त्वं यथा "तिथिदिनकरणर्क्षलग्नवीर्य्यं प्रति वयमाह पराशरः क्रमेण" । रयोविंशः । "तिथिरेकगुणा प्रोक्ता वारश्चैव चतुर्गुणः । ऋक्षं स्यात् षोडशगुणं योगश्चैव शताधिकः ॥ सहस्रेणाधिकः सूर्य्यश्चन्द्रो लक्षगुणाधिकः । वर्जयित्वा बलं सर्वं तस्माच्चन्द्रबलं बलम् ॥ लग्नमात्मा चन्द्रमाश्च मनःकर्म्मफलं प्रति । तस्माल्लग्नाच्छशाङ्काच्च नराणां फलमादिशेत्" ॥ ब्रह्मसिद्धान्ते । "तिथिरेकगुणा प्रोक्ता नक्षत्रञ्च चतुर्गुणम् । करणं षड्गुणं प्रोक्तं वारश्चाष्टगुणः स्मृतः" ॥ एवञ्चाशुभचन्द्रादौ प्रतीकारविधानात् प्रभवति हि न दोषो भूरिभावे गुणानामित्याद्यभिधानात् षट्वर्गप्रकरणे कष्टाभीष्टे तुल्यमल्पे फले चेत् स्यातां नाशफलयोस्तत्र वाच्यः । "वाच्या पङ्क्तिर्य्यातिरिक्तस्तयोः स्यात् सर्व्वस्थाने कल्पनैवं प्रदिष्टा" इति वादरायणवचनात् पङ्क्तिः परीपाकः । ये ग्रहारिष्टसूचका इत्यभिधानाच्च राजमार्त्तण्डे । "चन्द्राग्निधनगाः पापाल्लग्नाद्वा निधनोपगाः । कर्त्तुश्च फलनाशः स्याद्भग्नभाण्डे पयो यथा ॥ इन्द्वष्टमगान् पापान् वर्जयेन्नैधून

विलग्नश्च चन्द्रश्च निधनसंस्थं सर्वारम्भप्रयोगेषु" इत्यादि-ज्योतिःशास्त्रोक्तनिषेधस्य न पर्य्युदासता ततोऽष्टमचन्द्रादौ तत् प्रतीकारकरजतदानादिपूर्वकं नवान्नश्राद्धादिकरणे तन्निष्पत्ति-र्भवति न तु रात्र्यादौ श्राद्धकरणे श्राद्धानिष्पत्तिरिव कर्म्मा-निष्पत्तिरिति। किन्तु यदि प्रतीकारपूर्वकं करोति न दोष-जनकम् अन्यथा अनिष्टजनकमिति अतएव यज्ञायां सूचकलेन पूर्वसिद्धत्वात् पूर्वमपि प्रतीकाराय प्रायश्चित्तानुष्ठानमिति। तथोक्तं भगवत्या रुक्मिण्या भविष्यद्विवाहे श्रीभागवते। "चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः। पुरोहितोऽथर्ववित्तु जुहाव ग्रहशान्तये॥ हिरण्यरूप्यवासांसि तिलांश्च गुड-मिश्रितान्। प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः"॥

"शनिचक्रं नराकारं लिखित्वा सौरिभादितः। नाम भर्क्षं भवेद्यत्र फलं तत्र शुभाशुभम्॥ एकं मुखे द्वयहस्ते चत्वारि षट् पदद्वये। हृदि पञ्च करे वामे चत्वारि मस्तके त्रयम्॥ द्वयं नेत्रद्वये गुह्ये द्वय तत्र न्यसेद्बुधः। मुखे हानि-र्जयो दक्षे भ्रमः पादे श्रियो हृदि॥ वामे भीर्मस्तके राज्यं नेत्रे सौख्यं मृतिर्गुदे। तस्मादष्टद्वादशे च राशौ यदा विघ्नकरः शनिः॥ तदा सौख्यं वपुस्त्वन्तु कृतश्रीर्पि नेत्रद्वयोः। तृती-यैकादशे षष्ठे यदा सौख्यकरः शनिः॥ तदा विघ्नः शरीरस्थो गुह्ये वक्षोऽङ्घ्रिवामयोः। यस्य पीडाकरः सौरिस्तस्य चक्रे फलन्त्विदम्। लिखित्वा कृष्णद्रव्येण तैलमध्ये विपे-त्ततः॥ निक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः प्रपूजयेत्। तुष्टिं याति न सन्देहः पीडां त्यक्त्वा शनैश्चरः"॥

अथ प्रकीर्णकम्। "गुरोर्युगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ। गुर्वादित्ये दशाहे तु वक्रे जीवाष्टविंशके॥ पूर्वराशा-वनायातातिचारिगुरुवत्सरे। मासाशिगन्तृजीवस्य चातिचार-

त्रिपञ्चके ॥ कम्पाद्यद्भुतसप्ताहे नीचस्थज्ये मलिम्लुचे । भानुलङ्घितके मासि क्षये राहुयुते गुरौ ॥ पौषादिकचतुर्मासे चरणाङ्कितवर्षणे । एकेनाङ्का चैकदिने द्वितीयेन दिनत्रये ॥ तृतीये तु सप्ताहे माङ्गल्यानि विर्जीविषुः । विद्यारम्भकर्णवेधौ चूडोपनयनोद्वहान् ॥ तीर्थस्नानमनाद्यत्वं तथानादिसुरेक्षणम् । परीक्षा रामयज्ञांश्च पुरश्चरणदीक्षणे ॥ व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने । प्रतिष्ठारम्भणे देवकूपादेः परिवर्जयेत् ॥ द्वात्रिंशद्दिवसायास्ते जीवस्य भार्गवस्य च । द्वासप्ततिर्महत्यस्ते पादास्ते द्वादशक्रमात् ॥ अस्तात् प्राक् परयोः पञ्च गुरोर्वा द्विकबालतो । पञ्च वृद्धो महास्ते तु भृगुर्बालो दशाङ्किकः ॥ पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्" ॥ अत्यन्ताशक्तौ राजमार्त्तण्डे । "द्वाते वृद्धे च सन्ध्यांशे चतुःपञ्च त्रिशरान् । जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् ॥ बालभृगौ परिणीता युवतिरसाध्वी भवेदवश्यम् । वृद्धे तस्मिन् वन्ध्या सन्ध्यास्ते मृत्युमभ्येति ॥ एकराशौ गतौ स्यातामेकर्क्षविषयौ यदि । गुर्वादित्यौ सदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः" ॥ गुर्वादित्ये दशाहे स्थिति प्रागुक्तं नक्षत्रभेदविषयम् । रविग्रहयोरंशकविश्लेषाभ्यन्तरस्थिता अस्तत्वमाह सूर्यसिद्धान्तः । "एकादशामरेज्यस्य तिथिसंख्यार्कजस्य च । अस्तांशा भूमिपुत्रस्य दशसप्ताधिकास्तथा ॥ चन्द्रो द्वादशभिः पश्चात् दृश्यः प्राग्यात्यदृश्यताम् । पश्चादस्तमयोऽष्टाभिरुदयः प्राग्महत्तया ॥ प्रागस्ते तूदयः पश्चात् खल्पत्वात् दशभिर्भृगोः । एवं बुधो द्वादशभिश्चतुर्दशभिरंशकैः ॥ वक्रशीघ्रगतियार्कात् करोत्यस्तमयोदयौ" ॥ क्वचित् प्रतिपच्चेऽपि चन्द्रदर्शनम् । "अनमायाश्च शरदि हेमन्तेऽप्यतुषारिणि । रवेः सार्द्धदशांशेऽपि दृश्यतामिति चन्द्रमाः" ॥ शतानन्दः । "माघ्यां यदि मघा

श्वास्ति सिंहे गुरुरकारणम्"॥ अत्रैव माण्डव्यः। "श्रुति-विधजातकान्नप्राशनचूडादिकः सर्वः। रविभवनस्थे जीवे कार्य्योवर्ज्यो विवाहस्तु"॥ रविभवनस्थे सिंहस्थे विवाहे विशेषो वक्ष्यते। भोजराजः। "एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे। प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने॥ अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने। सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्"॥ व्रतबन्धने उपनयने। भृगुः। "सौम्ये राजनि सप्ताहो ब्राह्मणानां षडहस्तथा। शूद्रस्यार्धदिनं प्रोक्तं सर्वकार्य्येषु वै भृगुः"॥ गर्गः। "दिग्दाहे दिनमेकन्तु ग्रहे सप्तदिनानि च। भूकम्पे च समुद्भूते त्र्यहाणि परिवर्जयेत्॥ उल्कापाते च त्रितयं धूमे पञ्चदिनानि च। वज्रपाते दिनमेकं वर्जयेत् सर्वकर्मसु"॥ भोजराजः। "ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापातनादिदोषे। व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्"॥ ग्रहणकाले भूकम्पोल्कापातकरकापातवज्रपातादिसमाहारे त्रयोदशाहमग्रहम्। किञ्चिदूनतत्समाहारे दशाहम् एकैकोदये त्र्यहमिति मिश्राः। काश्यपः। उल्कालक्षणम्। "हस्वपुच्छा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा मता"॥

अथ निर्घातः। गर्गः। "यदान्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः"॥

अथ केतुः। "केतवश्च शिखावन्ति ज्योतींषि स्थिरतराण्युत्पातरूपाणि"। दीपिकायां "गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे॥ याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्"॥ प्रतिप्रसवे न्यूनाधिकादिविरोधे राजमार्त्तण्डः। "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि मीमांस्यानीह कोविदैः"॥

अथाकालदृष्टिः । कृत्यचिन्तामणौ । "मार्गान्मासात् प्रभृतिमुनयो व्यासवाल्मीकिगर्गायेवं यावत् प्रथमथविधौ नेति काल वदन्ति । नाडीजङ्घः सुरगुरुमुनिर्वक्ति दृष्टेरकालौ मासावेतौ न शुभफलदौ पौषमाघौ न ज्येष्ठा:" ॥ स्मृतिसारे ज्योतिषम् । "एकराशिस्थितौ स्यातां यदि राहुबृहस्पती । विवाहव्रतयज्ञादि तदा सर्वत्र वर्जयेत्" ॥ भीमपराक्रमे । "वापीकूपतडागादिनिषिद्धं सिंहगे गुरौ । मकरस्थे तु तत् कार्य्यः न दोषः काललोपजः ॥ कार्य्यं मकरगे जीवे विवाहाद्यखिलं बुधै । न तु सिंहगते जीवे कुर्वाणो मृत्युमाप्नुयात्" ॥ मुहूर्त्तामृते । "अतिबलवान् हि चन्द्रोऽनिष्टफलः क्षणपक्षमोपरतः । अतिविषमगतापि तारा सितपक्षे नाशुभं कुरुते ॥ प्रदेष विहोऽप्यशुभान्वितोऽपि विरुद्धतारोऽपि विलोमगोऽपि । करोति पुसा सकलार्थसिद्धिं विहाय पाणिग्रहणं हि पुष्यः ॥ पुष्यः परकृतं हन्ति न च पुष्यकृतं परः । अपि द्वादशगे चन्द्रे पुष्यः सर्वार्थसाधकः ॥ ध्रुवमसृतकरेऽष्टमेऽपि पुष्यो विहितमुपयाति सदैव कर्मसिद्धिम्" ॥ वशिष्ठः । "क्षीणोऽपि यस्येह शुभक्रियासु क्रूरोविलग्ने मदनेऽथवा स्यात् । आसन्नमृत्युं तमुदीरयन्ति सन्तोऽथवा मृत्युसमं प्रपन्न. ॥ लग्नदोषाश्च ये केचित् ग्रहदोषास्तथापरे । ते सर्वे विलयं यान्ति लग्ने गुरुभृगू यदा" ॥ श्रीपतिव्यवहारनिर्णये । "विष्टावङ्गारके चैव व्यतीपाते शनैश्चरे । निधने जन्मनक्षत्रे मध्याह्नात् परतः शुभम्" ॥ तथा "रेवती रविवारेण हस्ता सोमेन संयुता । पुष्याऽश्विनिपुत्रेण रोहिणी बुधसंयुता ॥ स्वाती च गुरुणायुक्ता शुक्रेणोत्तरफल्गुनी । मूलन्तु पङ्गुसङ्गेन सर्वकार्य्येषु शस्यते" ॥ भीमपराक्रमे । "अश्विनी सह सूर्य्येण सोमे मृगशिरास्तथा । अश्लेषा भौमवारेण बुधे हस्तः प्रकी-

र्त्तितः॥ अनुराधा गुरोर्वारे विश्वदेवस्तु भार्गवे। वारुणं शनिसंयुक्तमामन्दोऽयं प्रकीर्त्तितः"॥ दीपिकायाम्। भूमिपुत्रार्कयोरह्नि नन्दामरुद्दाश्वपाद्रान्त्यचित्रादिमूलाग्निभिः। भार्गवेन्द्वोर्द्वयोरह्नि भद्रा भवेत् फल्गुयुग्मान्त्ययुग्मोडुसंयुता। सोमपुत्रस्य वारे जया स्यान्मृगोपेन्द्रगुर्विन्द्रयाम्याभिजिद्वाजिभिः। सौम्यसौरेऽह्नि रिक्ता च युक्ता यदा विश्वशक्राग्नियुक् पित्रादित्यवसुभिः। सूर्य्यसुतस्य दिने यदि पूर्णा ब्रह्मादिनाधिपतिद्वयविषैः स्यात् योगवरास्त्रिभिरेव समेताः सर्व्वसमीहितसिद्धिनियुक्ताः। व्रतस्तम्। "ध्रुवगुरुकरमूला पौष्णभान्यर्कवारे हरियुगविधियुग्मे फल्गुनी भाद्रयुग्मं दिवसकरतुरङ्गौ शर्वरीनाथवारे। गुरुयुगनलवातोपान्त्यपौष्णानि कौजे दहनविधिशताख्या मैत्रभं सौम्यवारे। मरुददितिभपुष्यामैत्रभं जीववारे भगयुग जयुगश्वीविष्णुमैत्रे सिताह्नि श्रमनकमलयोनी सौरिवारेऽमृतानि"।

अमृतम्। राजमार्त्तण्डे। "चन्द्रार्कयोर्भवेत् पूर्णा कुजे भद्रा गुरौ जया। बुधमन्दौ च नन्दायां शुक्रे रिक्तामृततिथिः। आदित्यहस्ता गुरुपुष्ययुक्ता बुधानुराधा शनिरोहिणी च। सोमे च विष्णुः कुजरेवती च शुक्राश्विनी चामृतयोगवर्गाः। यदि विष्टिव्यतीपातौ दिनं चाप्यशुभं भवेत्। हन्यतेऽमृतयोगेन भास्करेण तमो यथा"। कस्य मते येष्ट्वादियोगहननेऽमृतयोगस्य न सामर्थ्यम्। तथा राजमार्त्तण्डः। "हन्त्यमृताख्यो योगः सर्व्वाण्यशुभानि हेलया नियतम्। न भवति पुनरिह शक्तो वैधृति विष्टिव्यतीपाते। वाराः क्रूरास्तिथिर्भद्रापादैकपाद्भिरतत्रयम्। एतत्त्रयसमायोगे त्रिपुष्करमुदाहृतम्। त्रिपुष्करे तु यत् किञ्चित् शुभं वा यदि वा शुभम्। जायते त्रिगुणं सर्व्वं प्रायोजातन्तु धारणः। स्वामोदामिर्भयो

वृद्धिः पुत्रजन्म तथैव च। नष्टं दत्तं सृतं वापि तत् सर्वं विगुणायते। सर्वदेशाविशेषेण फलं स्यात् शुभयोगजम्। अमृतं सिद्धियोगश्च यद्येकस्मिन् दिने भवेत्। तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथाविषम्"। वराहः। "दुःस्वप्ननाशको वारो नक्षत्रं पापनाशकम्। तिथिरायुष्करी प्रोक्ता योगो वृद्धिविवर्द्धकः। चन्द्रः करोति सौभाग्यमंशकः। शुभदायकः करणाज्जभते लक्ष्मीं यः शृणोति दिने दिने। आरूढो द्विरदे रथे च तुरगे पाषाणकाष्ठादिके नौकायां तरणे उपाम हि कथागम्ले तथा क्रोधने। उच्छिष्टे दिनरात्रिविशेषसमये नक्षत्रवारादिकं दैवज्ञो न पठेत् पठेद्यदि पुनः श्रोता श्रियं नाप्नुयात्"। आलिङ्ग्ये वर्ज्यमधिकृत्य भविष्ये। "तिथिनक्षत्रयोगानां वारणाञ्च तथा विभो। सूतको जीविकार्थञ्च यत्र मूल्येन पाठयेत्"। अत एव यमः। नक्षत्रैर्जीव्यते यत्र सोऽन्धकारं प्रपद्यते"। ज्योतिषे। "सर्वत्र कार्य्ये बुधशुक्रजीवाः केन्द्रत्रिकोणोपगताः प्रशस्ताः। तृतीयलाभारि गताश्च पापास्तिथिर्विरिक्ता शुभदस्य चाह्नः"। शतानन्दरत्नमालायाम्। "न वारदोषाः प्रभवन्ति रात्रौ विशेषतो भौमशनैश्चरार्काः। शुभपापग्रहक्षेत्रं केवलं फलदं तथा। ग्रहयुक्तेक्षिते तु स्यात् फलं तदनुसारतः। तारापति विलग्नं वा दुरितग्रहमध्यगम्। विवाहादिषु कार्य्येषु त्यजेच्चिरजिजीविषुः। कार्य्यारम्भे विलग्नादष्टममिन्दुं विवर्जयेत्। क्रूरं सपापं पापवर्गस्थं लग्नं चन्द्रञ्च वर्जयेत्। बलनिर्द्धारणा देव सर्वत्र फलनिश्चयः। निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम्। केन्द्रं वापि शुभैर्हीनं पापाढ्यमपि वर्जयेत्। नन्दाद्याः सिद्धियोगा भृगुजबुधकुजार्कीज्यवारैः प्रशस्ताः सूर्य्याशाग्निषडष्टगमुनिमिततिथयोऽर्कादिवारैः प्रदग्धाः"। राजमार्त्तण्डे। "माषारुद्रादिशो रामा षट्पञ्चमुनयस्तथा। दद्यन्ते

तिथय सप्त रव्यादि सप्तभिर्यहे। । द्वादशकंयुता भवेदशुभदा सोमेन चैकादशी भौमे चापि युता तथैव दशमी नेष्टा हतीया बुधे षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्वितीया तथा सर्वारम्भ-विनाशविघ्नजननी सूर्य्यात्मजे सप्तमी। पापोऽर्काहे विशा-खात्रययमसुदुपर्याङ्क चित्रा चतुष्क तोय विश्वाभिजिद्वं त्वथ कुजदिवसे स्वत्रय विश्वदो श्वाहे मूलाविशाखा यमधनसुर-गान्त्यानिजेवेह्नि पित्र्यं रोहिण्याद्रीयमेन्द्रूयतभमथ भृगोरह्नि-पुष्याग्नयेन्द्रौ सौराहे हस्तयुग्माश्वमयमजनयुक्पौष्णपुष्याध-नानि यण्टोऽखण्डयुक्तं स्व्रदपतिदिने सौम्यवारेऽयमापि"। मिहिदग्धपापयमघण्टयोगा। "रव्यादि दिवसे युक्ता विशा-खादिचतुष्टयः। उत्पाटाख्त्रयः काला मृत्युनानि यथाक्र-मम्"। उत्पाटादियोगः। "वाजिचित्रोत्तराषाढा मूलपा-श्नोष्णभान्तकाः। सूर्य्यादिवारसंयुक्ता योगाः करकचाः स्मृताः"। करकचा योगः। "आदित्य भौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः। बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा। यमघण्टे त्यजेदष्टौ कृत्यौ द्वादशनाडिकाः। अन्येषा पापयो-गानां मध्याह्नात् परतः शुभम्"। यमघण्टादीनां वर्ज्यकाल-निर्णयः। राजमार्त्तण्डे "द्वितीया मीनधनुषोश्चतुर्थी वृष-कुम्भयोः। मेषकर्कटयोः षष्ठी कन्यामिथुनकेऽष्टमी। दशमी वृश्चिके सिंहे द्वादशी मकरे तुले। आद्या धनु सु सफरीषु। परा द्वितीया एकान्तरे दिनकरे तिथयः प्रदग्धाः। कार्मुके च तथा कुम्भे मेषे युग्मे हरी घटे। एषु शुक्लाद्वितीयाद्या दग्धाः कृष्णा झषादिषु। राश्नोश्चन्द्रस्य च रवे स्थित्वा वाच्य फलं बुधैः। याः प्रोक्तास्तिथयो दग्धाः मेषादिषु च राशिषु शुक्लास्ताविषमे राशौ समे कृष्णाः प्रकीर्त्तिताः। एभिर्जातो न जीवेत यदि शक्रसमो भवेत्। विवाहे विधवा नारी यात्राया

मरणं भवेत्। निष्फलं कृषिवाणिज्यं विद्यारम्भे च मूर्खता। गृहप्रवेशे भङ्गः स्याच्चूडायां मरणं ध्रुवम्। ऋणदाने फलं नास्ति व्रतदाने च निष्फले। शुभकर्माणि सर्वाणि नैव कुर्य्याद्विचक्षणः"॥ छक्रराशिषु चन्द्रस्थित्या दग्धायां व्यक्तं यथा "षष्ठी मेषकुलीरयोर्हिमकरे कन्यायुगे चाष्टमी सिंहे वृश्चिकराशिगे च दशमी तौ लौ मृगे द्वादशी चापे चाथ झषेद्विका यदि वृषे कुम्भे चतुर्थी यदा दग्धाख्यास्तिथयो वदन्ति मुनयस्त्वक्ता सदा कर्मसु। त्यज रविमनुराधे वैश्वदेवञ्च सोमे शतभिषमपि भौमे चन्द्रजे चाश्विनी च। मृगशिरमपि जीवे सर्पदेवञ्च शुक्रे रविसुतमपि हस्ते वर्जनीयाश्च सप्त। अयोगेषु च सर्वेषु पूर्वयामं परित्यजेत्। अयोगाश्च विनश्यन्ति चन्द्रशक्तिहता इमे। ककचामृत्युयोगाश्च दिनं दग्धं तथा परे। शुभे चन्द्रे प्रणश्यन्ति तृणा वह्याहता इव"। शुभचन्द्रेण ककचा शान्तिः। ज्योपतिः। "विरुद्धसंज्ञास्तिथिवारयोगा भचक्रवारप्रभवाश्च ये वै। हूनाङ्गवङ्गेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते विरुद्धाः"॥

अथ सर्वतो भद्रम्। "अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपनम्। विख्यातं सर्वतोभद्रं सद्यः प्रत्ययकारकम्। ऊर्द्ध्वगा दश विन्यस्य तिर्य्यग्रेखास्तथा दश। एकाशीतिपदं चक्रं जायते नात्र संशयः। अकारादि स्वराः कोष्ठेष्वीशादौ विदिशि क्रमात्। प्रदक्षिणक्रमाज्ज्ञेया ज्योतिःशास्त्रविशारदैः। कृत्तिकादीनि धिष्ण्यानि पूर्वाशादि लिखेत्ततः। सप्त सप्त क्रमेणैव चाष्टाविंशतिसंख्यया। अवकहडाः पूर्वस्यां मटपरताश्चेति दक्षिणस्यां नयभजखा वारुण्यां गसदचलायोत्तरस्यां स्युः। वयक्षयो हयाद्यास्तु पूर्वादि क्रमतो बुधैः। राशयो द्वादश स्थाप्या मेषाद्या दक्षमार्गतः। शेषेषु कोष्ठके-

ष्वेवं नन्दादि तिथिपञ्चकम्। वाराणां सप्तकं लेख्यं भौमाद्यं तत्तिथिक्रमात्। इत्येष सर्वतोभद्र प्रस्तावः कथितो मया। यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रयं भवेत्। ग्रहदृष्टिवशेनात्र वामदक्षिणसंमुखे॥ भुक्तं भोग्य तथाक्रान्तं विद्धं क्रूरग्रहेण भम्। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः॥ वक्रगे दक्षिणादृष्टिर्वामा-दृष्टिश्च शीघ्रगे। संमुखो मध्यचारे च ज्ञेया भौमादिपञ्चके॥ सूर्य्ययुक्ता ग्रहाः शीघ्रास्तथा चार्के द्वितीयगे। समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे॥ वक्रा स्युः पञ्च षष्ठेऽर्के त्वतिवक्रा नगाष्टगे। नवमे दशमे भानौ जायते सहजा गतिः॥ द्वाद-शैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः॥ रविस्थित्यग्रकस्थिता ग्रहाः संख्यात्र कल्प्यते। न तु राश्यन्तरस्थमात्र द्वितीयादिनिरू-पणम्॥ राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ। गते-रेकस्वभावत्वादेषां दृष्टित्रयं सदा॥ क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः। स्युः सहजस्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः॥ घङछाः षणठाश्चैव धफढाश्च भजास्तथा। एतन्निकं त्रिकं विद्धं त्रिभिः कपभटैः क्रमात्॥ घङछा रौद्रगे वेधे षणठाऽस्तगे ग्रहे। धफढा पूर्वाषाढायां भभजा भाद्र उत्तरे। रवौ शसौ खयौ चैव जयौ षमौ परस्परम्॥ एकेन हि द्वयं ज्ञेयं शुभाशुभप्रदव्यधे। अवर्णादिस्वरद्वन्द्वे त्वेकवेधात् द्वयो-र्व्यधः॥ युग्मवर्णात्मके वेधे अनुस्वारविसर्गयोः" ॥ सका-रादियुग्म-वर्णात्मकवेधवदनुस्वार-विसर्गयोरेक-वेधादुभयवेध इत्यर्थः। "कोणस्य स्वरयोर्मध्ये नन्दादिपादगे ग्रहे। अकरादिचतुष्के तु वेधः पूर्णतिथौ तथा। एकादिक्रूरवेधेन फलं पुंसा प्रजायते॥ उद्वेगश्च भयं हानिर्व्याधिर्मृत्युः क्रमेण च। ऋक्षे भ्रमोऽक्षरे हानिः स्वरे व्याधिर्भयं तिथौ॥ राशौ विद्धे महाविघ्नः पञ्चविद्धो न जीवति। एकवेधे भयं युद्धे

युग्मवेधे धनक्षयः ॥ त्रिवेधे तु भवेद्भङ्गो मृत्युर्वेधे चतुर्ग्रहैः" ॥ दृष्टिवये उदाहरणमाह "भरण्यकारवृषभं नन्दां भद्रां तुलाञ्च भम् । विशाखां हरिभं विध्येद् ग्रह आग्नेयसंस्थितः" ॥ उदाहरणान्तरमाह "वं युग्ममीस्वरं कन्या रेफं स्वातीमुकारकम् । अश्विनीं रोहिणीञ्चोऽभिजिद्बमेवं परेष्वपि ॥ यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्तः पुनः सौम्यो ज्ञेयः क्रूरफलप्रदः ॥ अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते । रोगपीड़ाकरः सौरी राहुकेतू च विघ्नदौ ॥ चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे । बुधवेधे भवेत् प्रज्ञा जीवः सर्वशुभप्रदः ॥ क्षयचक्रे बलं पूर्णं पादोनं मित्रगे ग्रहे । अर्द्धं समगृहे प्रोक्तं पादं शत्रुगृहे स्थिते ॥ इदञ्च सौम्य क्रूराणां बलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्ययात् ॥ स्थानवेधसमायोगात् यत् मध्यं जायते बलम् । तत् मध्यं वेध्यवस्तूनां फलं ज्ञेयं शुभाशुभम् ॥ दृष्टिहीने पुनर्वेधे न स्यात् किञ्चित् शुभाशुभम् । वक्राः सौम्यास्तथा क्रूराः वक्राः शीघ्रोऽनीचगाः ॥ स्थानञ्च वेध्यमित्येव मर्म ज्ञात्वा फलं वदेत् । वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते ॥ स्वभावजं फलं शीघ्रे नीचस्थोऽर्द्धफलो ग्रहः । तिथिराश्यृक्षनक्षत्रं विद्धं क्रूरग्रहैश्च यत् ॥ सर्वेषु शुभकार्येषु वर्जयेत्तत् प्रयत्नतः । न नन्दति विवाहे च यात्राया न निवर्त्तते ॥ रोगादिमुच्यते रोगी वेधयेन्ना हतोद्यमः । रोगकाले भवेद्वेधः क्रूरस्वेचरसम्भवः ॥ वक्रगत्या भवेन्मृत्युः शीघ्रे पाप्यरुजान्वितः । वेधस्थाने रणे भङ्गो दुर्गे वाञ्चः प्रजायते ॥ कविप्रवेशन तत्र योधाघातश्च तत्र वै" ॥ कविपोर्यादा । "यत्र पूर्वाटिक्षाद्यायां प्रवराञ्जादिगो रविः । माटिगस्तामिता ज्ञेया शेषास्तिस्रः सदोदिताः ॥ दुंगानस्थाः स्मरः प्राच्यां ज्ञेया याम्यामथाग्निगाः । नैर्ऋते तस्याश्च वारुण्यां

वायव्यां सौम्यगा मताः॥ नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः। ते सर्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिकः॥ नक्षत्रेऽस्ते रुजा वर्णे हानिः शोकः स्वरेऽस्तगे। राशौ विघ्नस्तिथौ भीतिः पञ्चास्ते मरणं भवेत्। यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्ययोः। न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः। पञ्चाशायां स्थितं यस्य नाम्नः प्रथममक्षरम्। स प्राप्तः सर्वकार्य्येषु जेथी दैवहती नरः। करौ कोष्ठे तथा द्वन्द्वे चातुरङ्गमहाहवे। वर्ण्याश्चास्तं गता योधा यदोच्छेदि जयं रणे। नक्षत्रेऽभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम्। राशौ जयस्तिथौ तेजः पञ्चाप्तिः पञ्चकोदये। प्रश्नकाले भवेद्दिद्वं यल्लग्नं क्रूरखेचरैः। तद्दुष्टं शोभनं सौम्यैर्मिश्रैर्मिश्रफलं भवेत्। यहाविद्वस्तु यल्लग्नं फलं लग्नस्वभावतः। ज्ञातव्यमौचिते केन्द्रे भावितं चचरादिकम्। शीर्षोदये सौम्य विलग्नवर्गे लग्नेऽपि वा सौम्ययुते शुभं स्यात्। अतोऽन्यथा हेतु तदन्वयात्वं मिश्रं विमिश्रैरधिकं बलाद्यैः। केन्द्रोपगा नवम पञ्चमगाश्च सौम्याः केन्द्राष्टवर्जमशुभस्त्वाय षष्ठसंस्थाः। सर्वार्थसाधनकराः परिपृच्छतां स्युरेभिर्विपर्य्ययगतैस्तु विपर्य्ययः स्यात्। लग्नाधिनाथो यदि केन्द्रगः स्यात् तस्मिन्नमेतस्य च केन्द्रगं वा। व्ययष्टकेन्द्राण्यपहाय पापा यन्त्रव याता यदि तच्छुभं स्यात्। आयोलग्नाधिपः कार्य्ये लग्ने कार्य्याधिपो यदि। द्वितीयो लग्नपो लग्ने कार्य्ये कार्य्याधिपो यदि। लग्नपः कार्य्यपश्चापि लग्ने यदि तृतीयकः। चतुर्थः कार्य्यपो स्यातां यदि लग्नपकार्य्यपौ। कार्य्यसिद्धिस्तदा ज्ञेया मित्रचेदधिकं मतम्। एवं दृष्टिवशाज्ज्ञेयं फलं यद्वचतुष्टयम्। पूर्णनाडीस्थितो दूतो यत् पृच्छति शुभाशुभम्। तत् सर्वं सिद्धिमाप्नोति शून्ये शून्यं समीरणे। आदौ शून्यगतः पृच्छेत् पश्चात् पूर्णं विशेद्

यदि। तदा सर्वार्थसिद्धिः स्यात् वामे वामं न संशयः। श्वासप्रवेशकाले चेद् तो जल्पति वाञ्छितम्। तस्यार्थः सिद्धिमाप्नोति निर्गमे नास्ति सुन्दरम्। ऊर्द्धवामाग्रतो दूतो ज्ञेयो वामपथस्थितः। पृष्ठे दक्षे तथाधस्तादक्षवाहो गतो मतः। यात्रादानविवाहेषु वस्त्रालङ्कारभूषणे। शुभे कर्मणि सन्धौ च प्रवेशे वामगः शुभः। कलहद्यूतयुद्धेषु स्नानभोजनमैथुने। व्यवहारे भये भङ्गे दक्षनाडी प्रशस्यते। क्रूरेकभयतो विद्धा यस्याक्षरतिथि स्वराः। राशिधिष्ण्यञ्च यद्यपि तस्य मृत्युर्न संशयः। मण्डलं नगरं ग्रामो दुर्गं देवालयं पुरम्। क्रूरेकभयतो वेधे विनश्यन्ति न संशयः। कृत्तिकायां तथा पुष्ये रेवत्याञ्च पुनर्वसौ। विद्धे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु। तैलं भाण्डं रसो धान्यं गजाश्वादि चतुष्पदाः। सर्वं महार्घतां याति यावत् क्रूरव्यधे स्थितम्। क्रूरवेधसमायोगे यस्योपद्रवसम्भवः। तस्य मृत्युर्न सन्देहो रोगाद्वाथ रणादपि। सूर्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम्। शूल्यष्टमगं मोक्ष सन्निपातं चतुर्दशम्। केतुमष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः। द्वाविंशतितमं कम्पं त्रयोविंशञ्च वज्रकम्॥ निर्घातञ्च चतुर्विंशमुक्ता चष्टावुपग्रहाः। प्रस्थाने विघ्नदाः प्रोक्ताः सर्वकार्य्येषु सर्वदा॥ जन्मभं कर्म्म आधानं विनाशं सामुदायिकम्। सांघातिकमिदं धिष्ण्यं षट्कं सार्वजनीनकम्॥ जातिदेशाभिषेकैश्च नव धिष्ण्यानि भूपतेः। वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम्॥ जन्मभं जन्मनक्षत्रं दशमं कर्म्मसंज्ञकम्। एकोनविंशमाधानं त्रयोविंशं विनाशकम्॥ अष्टादशञ्च नक्षत्रं सामुदायिकसंज्ञकम्। सांघातिकञ्च विज्ञेयं धिष्ण्यं षोडशमेव हि॥ षट्त्रिंशं राजजातञ्च जाति नाम्ना स्वजातिभम्। देशभं देशनामर्क्षं राज्यभं चाभिषेकभम्॥ मृत्युः स्यात्स्त्रंसे

विद्धे कर्मभे क्लेश एव च। आधानार्क्षे प्रवासः स्यात् विनाशे बन्धुविग्रहः॥ सामुदायिकभेरिष्टं हानि सांघातिके तथा। जातिभे कुलनाशः स्यात् बन्धनञ्चाभिषेकभे॥ देशर्क्षे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम्। उपग्रहसमायोगे मृत्युर्भवति नान्यथा॥ भयं भङ्गश्च घातश्च मृत्युर्भङ्गयुता स्मृतिः। क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत्॥ तिथिं धिष्ण्यं स्वरं राशिं वर्णञ्चैव तु पञ्चमम्। यद्दिने वेधयेच्चन्द्रस्तद्दिने स्यात् शुभाशुभम्"॥

अथ बालादिचक्रम्। "ऋवर्णञ्च लृवर्णञ्च त्यक्त्वा कोष्ठेषु पञ्चसु। अकाराद्याः स्वरा लेख्या एकैकस्मिन् दिशं दिशम्॥ कादिहान्तान् लिखेद्वर्णान् स्वराधो ङञणोज्झितान्। तिर्य्यक् पङ्क्तिक्रमेणैव पञ्चत्रिंशत् प्रकोष्ठके॥ अकारादिक्रमात् न्यस्य नन्दादितिथिपञ्चकम्। अर्क्ककुजौ विधुज्ञौ च गुरुः शुक्रः शनिस्तथा॥ वाराः कोष्ठेष्वथो लेख्या अन्तरे सप्तभानि च। पञ्च पञ्च इकाराद्यो रेवत्यादिक्रमेण च॥ प्रसुप्तो बोध्यते येन येनागच्छति शब्दितः। तस्य नाम्नस्त्वादिवर्णो यत्र तिष्ठेत्स्वरस्य च॥ तस्माद्बालः कुमारश्च युवा वृद्धो मृतः क्रमात्। किञ्चिल्लाभकरो बालः कुमारस्त्वर्द्धलाभदः॥ सर्व्वसिद्धिं युवा धत्ते वृद्धे हानिर्म्मृते वधः। यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः। ग्राह्यस्तस्यादिमो वर्णः इत्युक्तं ब्रह्मयामले॥ तिथिवारर्क्षभेदेन प्रत्येकं बालकादिना। नामवर्णादितो ज्ञेयं फलं पुंसां दिने दिने॥ तिथ्यादिमेलनवशात् फलं ज्ञेयं शुभाशुभम्। युग्नि चये शुभं पूर्णमशुभञ्च मृतिक्षये। अन्यत्राप्येवमूह्यं स्यात् शङ्करेण शुभाशुभम्"॥

अथ विवाहः। "प्रसूत्याधानतः शुद्धिर्विषमेऽब्दे समे क्रमात्। विवाहे योषितां चन्द्रार्कज्यशुद्धिर्न्नृयोषितोः॥ सभर्तृकक्रिया-

रणो भर्त्तुर्गोचरशुभित:। यावोढाहे गर्भजन्मे स्वगृहगप्रीति तत्फलम्॥ प्रारभ्य जन्मसमयात् युवतेर्विवाहमोजाब्देषु मुनय: शुभमादिशन्ति। आधानत: प्रभृतित: समवत्सरेषु प्रोक्तस्तयोर्न शुभदस्तु विलोमवर्षे॥ अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता॥ मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत्। विवाहशुद्धिं प्रवदन्ति सर्वे वात्स्यादयो ज्योतिषि जन्ममासात्॥ युग्माब्देषु युवतेरपि जन्ममासात्। मासत्रयं विवहने परमब्दशुद्धिं प्राहु: समस्तमुनयो विषमे तु वर्षे मासत्रयादुपरित: खलु जन्ममासात्"। राजमार्त्तण्डे। "माङ्गल्येषु विवाहेषु कन्यासवरणेषु च। दश मासा: प्रशस्तास्ते चैत्रपौषविवर्जिता:। कन्यासंवरणे कम्बोदकविधौ दम्पत्योर्दिनवाष्टराशिरहिते दारानुकूले रवौ चन्द्रे चार्कंकुजार्किशुक्रविधुते मध्येऽथवा पापयो:। त्यक्त्वा च व्यतिपातवैधृतिदिन विष्टिञ्च रिक्तां तिथिं क्रूराहायणचवपौषरहिते मन्वायके मानुषे"। योगविशेषे दोषविशेषानाह रत्नमालायाम्। "कुलोच्छेदो व्यतीपाते परिघे स्वामिघातिनी। वैधृतौ विधवा नारी विषदाहोऽतिगण्डके। व्याघाते व्याधिसंघात: शोकार्त्ता दर्पणे तथा। शूले च व्रणशूलं स्यात् गण्डे रोगभयं तथा विषकुम्भेऽप्यहिदंश: स्यात् वज्रके मरणं भवेत्। एते वै दारुणा: सर्वे दश योगा: प्रकीर्त्तिता:"। आश्वलायन:। "उदगयने आपूर्य्यमाणे पक्षे कल्याणनक्षत्रे चौडकर्मोपनयनगोदान विवाहा:"॥ विवाह: सार्वकालिक इत्येके इति। "आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके। पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी मन्येष्वेव विवाहिता पतिरता नारी सम्मर्दा

भवेत्। हरौ प्रसुप्ते न च दक्षिणायने तिथौ च रिक्ते शशिनि-क्षयं गते। राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये। अति-प्रौढा च या कन्या नानुकूलं प्रतीक्षते। अतिप्रौढा च या कन्या कुलधर्मविरोधिनी अविशुद्धापि सा देया चन्द्रलग्नबलेन तु। अयनस्योत्तरस्यादौ मकरं याति भास्करः। राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम्" इति विष्णुपुराणोक्तस्य चूडादावयनस्य परिग्रहः दिनमानादि बोधे तु सिद्धान्तादयनपरिग्रहः। सार्वकालिक इत्यस्य विषयमाह भुजबलभीमे। "ग्रह-शुद्धिमब्दशुद्धिं शुद्धिं मासायनर्तुदिवसानाम्। अर्वाग्दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्। एतत्परन्तु विप्रेयमङ्गिरो वचनं यथा। कालात्यये च कन्यायाः कालदोषो न विद्यते। मलमासादिकालानां विवाहार्थे प्रयत्नतः। पुंसः प्रति सदा दोषात् सर्वदैव हि वर्ज्यता"। ज्योतिश्चिन्तामणौ। "वापीकूपतडागयागगमनक्षौर प्रतिष्ठाव्रतं विद्यामन्दिर कर्णवेधन महादानं वनं सेवनम्। तीर्थस्नान विवाहदेवभवनं मन्त्रादिदैवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे"। बृहद्राजमार्त्तण्डे। "सर्वाणि शुभकर्माणि कुर्य्यादस्तं गते सिते। विवाहं मेखला बन्धं यात्राञ्च परिवर्जयेत्"। यात्राञ्चेति चकारो वचनान्तरोक्त प्रातिस्विकनिषिद्धकर्मान्तरं समुच्चिनोति। "बाले शुक्रे वृद्धे शुक्रे नष्टे शुक्रे जीवे नष्टे। बाले जीवे वृद्धे जीवे सिंहादित्ये गुर्वादित्ये। तथा मलिम्लुचे मासि सुराचार्य्यऽतिचारगे। वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्। अतीचारं गते जीवे वक्रे चैव बृहस्पतौ। कामिनी विधवा प्रोक्ता तस्मात्तौ परिवर्जयेत्। अतीचारं गतो जीवः पूर्वभं नैव गच्छति। समचारेऽपि कर्माणि नैव तत्रैव संस्थिते"। देवलः। "बाले वृद्धे तथैवास्ते कुरुते

रम्भे भर्त्तुर्गीर्वरप्रहितः । यावोद्वाहे गर्भकाले स्वगृहवासीति तत्फलम् ॥ प्रारभ्य जन्मसमयात् युवतेर्विवाहमोजाब्दकेषु मुनयः शुभमादिशन्ति । आधानतः प्रभृतितः समवत्सरेषु प्रोक्तस्तयोर्न शुभदस्तु विलोमवर्षे ॥ अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत् । विवाहवृद्धिं प्रवदन्ति सर्व्वे माण्डव्यादयो ज्योतिषि जन्ममासात् ॥ युग्माब्दकेषु युवतेरपि जन्ममासात् । मासत्रयं विवहने परमन्त्यवृद्धिं प्राहुः समस्तमुनयो विषमे तु वर्षे मासत्रयादुपरितः खलु जन्ममासात्" । राजमार्त्तण्डे । "माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च । दश मासाः प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः । कन्यासंवरणे हस्तोदकविधौ दम्पत्योर्द्दिनवाष्टराशिरहिते ताराऽनुकूले रवौ चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः । त्यक्ता च व्यतिपातवैधृतिदिनं विष्टिञ्च रिक्तां तिथिं कुवारायनचैत्रपौषरहिते लग्नांशके मानुषे" । योगविशेषे दोषविशेषानाह रत्नमालायाम् । "कुम्भीच्छेदो व्यतीपाते परिघे स्वामिघातिनी । वैधृतौ विधवा नारी विषदाहोऽतिगण्डके । व्याघाते व्याधिसंघातः शोकार्त्ता हर्षणे तथा । शूले च व्रणशूलं स्यात् गण्डे रोगभयं तथा विष्कुम्भेऽप्यहिदंशः स्यात् वज्रके मरणं भवेत् । एते वै दारुणाः सर्व्वे दश योगाः प्रकीर्त्तिताः" । आश्वलायनः । "उदगयने आपूर्य्यमाणे पक्षे कल्याणनक्षत्रे चौडकर्म्मोपनयनगोदानविवाहाः" । विवाहः सार्व्वकालिक इत्येके इति । "आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके । पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी अन्येष्वेव विवाहिता पतिरता नारी समृद्धा

भवेत्। हरौ प्रसुप्ते न च दक्षिणायने तिथौ चरिक्ते शशिनि क्षयं गते। राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये। अतिप्रौढ़ा च या कन्या नानुकूलं प्रतीक्षते। अतिप्रौढ़ा च या कन्या कुलधर्मविरोधिनी अविशुद्धापि सा देया चन्द्रलग्नबलेन तु। अयनस्योत्तरस्यादौ मकरं याति भास्करः। राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम्" इति विष्णुपुराणोक्तस्य चूड़ादावयनस्य परिग्रहः दिनमासादि बोधे तु सिद्धान्ताद्यनपरिग्रहः। सार्वकालिक इत्यस्य विषयमाह भुजबलभीमे। "षड्गुणिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिवसानाम्। अर्वाक्द्वादशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्। एतत्परन्तु विज्ञेयमङ्गिरो वचनं यथा। कालात्यये च कन्यायाः कालदोषो न विद्यते। मलमासादिकालानां विवाहाद्ये प्रयत्नतः। पुंसः प्रति सदा दोषात् सर्वदैव हि वर्ज्यता"। कालचिन्तामणौ। "वापीकूपतडागयागगमनक्षौर प्रतिष्ठाव्रतं विद्यामन्दिर कर्णवेधन महादानं वनं सेवनम्। तीर्थस्नान विवाहदेवभवनं मन्त्रादिदेवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तंगते भार्गवे"। गृहराजमार्त्तण्डे। "सर्वाणि शुभकर्माणि कुर्य्यादस्तं गते स्थिते। विवाहं मेखला बद्धं यात्राञ्च परिवर्जयेत्"। यात्रा-चेति चकारो वचनान्तरोक्त प्रातिस्विकनिषिद्धकर्मान्तरं समुच्चिनोति। "बाले शुक्रे वृद्धे शुक्रे नष्टे शुक्रे जीवे नष्टे। बाले जीवे वृद्धे जीवे सिंहादित्ये गुर्वादित्ये। तथा मलिम्लुचे मासि सुराचार्य्येऽति चारगे। वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्। अतीचारं गते जीवे वक्रे चैव बृहस्पतौ। कामिनी विधवा प्रोक्ता तस्मात्तां परिवर्जयेत्। अतीचारे गतो जीवः पूर्व्वं नैव गच्छति। समचारेऽपि कर्माणि नैव तत्रैव दृश्यते"। देवलः। "बाले वृद्धे तथैवास्ते कुरुते

दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्। प्रागुक्तः शिशुरर्द्धस्तितय सितः स्यात्। पश्चाद्बाइमिति पञ्चदिनानि वृद्धः। प्राक्पञ्चमेव कथितोऽत्र वशिष्ठगर्गैर्जीवस्तु पञ्चमपि वृद्धशिशुर्विवर्ज्यः"। अत्यन्ताशक्तो राजमार्त्तण्डः "बाले वृद्धे च सम्प्राप्ते चतुःपञ्च दिवाकरान्। जीवे च भार्गवे चैव विवाहादिषु वर्जयेत्। वक्रे चैवातिचारे त्रिदशपतिगुरौ दैत्यपूज्ये च सुप्ते गुर्वादित्येऽधिमासे दिवसकर रिपौ वाक्पतौ चेन्नपौषे। विख्यातं केतुहृमे वा शरदि सुरगुरौ सिंहसंस्थे मनोज्ञे वर्षाद्वाप्नोति चोढ़ा सुनियतमरणं देवकन्यापि भर्त्तुः"॥ अक्रमधिकृत्य राजमार्त्तण्डे "बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत्। नष्टे च मृत्युमाप्नोति सर्वमेतद् गुरावपि॥ सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पित्रादिषु वशिष्ठगर्गादयः प्राहुः। गुरौ हरिस्थे न विवाहमाहुर्व्वरीतगर्गप्रमुखा मुनीन्द्राः। यदा न माघी मघर्क्षयुता स्यात् तदा तु कन्योद्वहनं वदन्ति"॥ यवैव माण्डव्यः। "मघा नक्षत्रं परित्यज्य यदा सिंहे गुरुर्भवेत्। तदाब्दे कन्यका चोढा सुभगा सुप्रिया भवेत्"॥ हारीतः। "अतीचारं गते जीवे वृषे वृश्चिककुम्भयोः। यज्ञोद्वाहादिकं कुर्यात्तत्र कालो न लुप्यते"॥ कृत्यचिन्तामणौ। "अतीचारं गते जीवे वृषे वृश्चिककुम्भयोः। तत्र चोद्वाहिता कन्या सम्प्रयोयात् कुलद्वयम्"॥ सङ्केतकौमुद्यां भौमपराक्रमे "यद्यातिचारं सुरराजमन्त्री करोति गोमकरमीनसंस्थः। न याति चेद्यापि पूर्वराशिं शुभाय पाणिग्रहणं वशिष्ठः॥ अतीचारं गते जीवे स्थिरराशौ च संस्थिते। तत्र न लुप्यते कालो वदन्त्येवं पराशरः॥ वापीकूपतडागादिनिषिद्धं सिंहगे गुरौ। मकरस्थे तु तत् कार्य्यं न दोषः काललोपजः"॥ यत्तु "कन्यावृश्चिक-

मेषेषु मिथुने च झषे वृषे। अतीचारेऽपि कर्त्तव्यं विवाहादि बुधैः सदा" इत्येतदमूलं द्वैतनिर्णयेऽप्युक्तं दीपिकायां "त्रिकोणजाया धनलाभराशौ वक्रातिचारेण गुरुः प्रयातः। यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः" ॥ देवीपुराणम्। "मकरस्थो यदा जीवो वर्जयेत् पञ्चमांशकम्। शेषेष्वपि च भागेषु विवाहः शोभनो मतः" ॥ भोजराजः। "यो जन्ममासे क्षुरकर्मयात्रां कर्णस्य वेधं कुरुते च मोहात्। नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि ॥ जातं दिनं दूषयते वशिष्ठस्त्वष्टौ च गर्गो यवनो दशाहम्। जन्माख्यमासं किल भागुरिश्च चौडे विवाहे क्षुरकर्णवेधे" ॥ श्रीपतिसमुच्चये "स्नानं दानं तपोहोमः सर्वमङ्गलवर्द्धनम्। उद्वाहश्च कुमारीणां जन्ममासि प्रशस्यते" ॥ ज्योतिश्चिन्तामणौ "जन्ममासि च पुत्राढ्या धनाढ्या च धनोदये। जन्मभे जन्मराशौ च कन्या हि ध्रुवसन्ततिः" ॥ गर्गः। "ज्येष्ठे मासि तथा मार्गे घोरं परिणय व्रतम्। ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्" ॥ अथ ज्येष्ठत्वमादिगर्भजातत्वं तथा च "जन्ममासि न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत्। आद्यगर्भभवपुत्रकन्ययोः। ज्येष्ठमासि न च जातु मङ्गलम्"। अत्र जन्ममासादौ पुत्रमात्रस्य निषेधः ज्येष्ठमासे तु ज्येष्ठपुत्रस्येति विशेषः। "अन्तिकाले रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत्। कलायेषु च सर्वेषु दिनानि दश वर्जयेत् ॥ रेवत्युत्तररोहिणीमृगशिरो मूलानुराधा मघा-हस्ता-स्वातिषु। तौलिषष्ठमिथुनेषु शस्यते पाणिग्रहः। सप्ताष्टान्त्यवर्हिःशुभैरुडुपतावेकादशद्वित्रिगे क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे" ॥ ज्योतिर्विदितलघ्वाद्र्धिके चित्रास्वग्या-धनिष्ठाश्विनीभद्रपादस्वोक्तं यथा "कुमार्याः पाणिं गृह्णीयाद्दिग्यस्रादिषु उत्तरफल्गुन्यादि-

त्रयोत्तरापाढ़ादित्रयोत्तरभाद्रपदादित्रयेषु नवसु नक्षत्रेष्वित्यर्थः। भीमपराक्रमे "पूर्वात्रये विशाखायां शिवाद्ये भवतुष्टये। कदा चाशुभवेत् कन्या विधवातो विवर्जयेत्॥ विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने यमे। एभिर्विवाहिता कन्या भवत्येव सुदुःखिता"॥ एतच्च पारस्करोक्तं यजुर्वेदिविषयमापद्विषयं वा बोध्यम्। "आद्ये मघा चतुर्भागे नैऋतस्याद्य एव च। रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः। कर्णवेधे विवाहे च व्रते पुंसवने तथा। प्राशने चाद्यचूडायां विद्धर्क्षं विवर्जयेत्"॥

विद्धर्क्षन्तु "तिथि १५ अङ्ग ६ वेद ४ एक १ दश १० जनविश १८ भ २७ एकादश ११ अष्टादश १८ विंश २० संख्याः। इष्टोड़ना सूर्य्ययुतोड़ना च योगादमूष्वेष्वयोगभङ्गः"॥ कर्म्मकालीनमनक्षत्रसूर्य्यभुज्यमाननक्षत्रयोर्मेलने यदि पञ्चदशाद्यन्यतमसंख्या भवति तदा न कर्म्मयोग्यमित्यर्थः। सप्तविंशाधिकत्वे सप्तविंशतिमपहाय शेषात् फलं अन्यथैकसंख्यानुपपत्तेः। अपवादस्तु। "आद्यपादे स्थिते सूर्य्ये तुरीयांशं प्रदुष्यति। द्वितीयस्थे तृतीयन्तु विपरीतमतोऽन्यथा"॥ व्यक्तमाह स्वरोदये। "आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्। द्वितीयेन तृतीयन्तु तृतीयेन द्वितीयकम्"॥

अत्रैव खर्जूरवेधः। तथा च रत्नमाला। "एकामूर्द्ध्वगतां त्रयोदश तथा तिर्य्यग्गताः स्थापयेत्। रेखास्तक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु॥ व्याघातादि तु मूर्द्ध्नि भन्तु कथितं तत्रैक्यरेखाश्रयोः सूर्य्याचन्द्रमसोर्मिथो निगदिता दृक्पात एकार्गलः"॥ व्याघातादीति व्याघातयोगसंख्याङ्कस्थयोदशाङ्कम्। तथा च हस्तादीनि नक्षत्राणि देयानीत्यर्थः।

दीपिकायां "कृत्तिकादिचतुःसप्त रेखा राशौ परिभ्रमन्।

प्रदर्शयेदेकरेखास्थो वेधः सप्तशलाकजः॥ सप्त सप्त विलिखेत् परेखिकास्तिर्य्यगूर्द्धमथ कृत्तिकादिकम्। लेखयेदभिजिता समन्वितं चेकरेखगखगेन विध्यते॥ वैश्वस्य चतुर्थांशे श्रवणादौ लिप्तिकाचतुष्के च। अभिजित् तत्स्थे खेचरे विज्ञेया रोहिणी विद्धा"॥ लिप्तिका दण्डः। "यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। रक्तांशुकेनैव तु रोदमाना श्मशानभूमिं प्रमदा प्रयाति"॥ सप्तशलाकवेधः।

पञ्चापवादो यथा राजमार्त्तण्डे। "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं यथाहृते। यथा तथाप्युडुपाद एव प्रदूषितोऽप्यन्त्रिपदं शुभावहम्॥ ऊर्द्ध्वं रेखास्थिताः पञ्च तिर्य्यक् पञ्च तथैव च। द्वे द्वे च कोणयोरेखे साभिजित् कृत्तिकादिकम्॥ शम्भुकोणे द्वितीये तु लेखयेत् सर्वकर्म्मणि। क्रूरैर्भिन्नमथो सौम्यैर्भञ्च परिवर्जयेत्॥ न लत्तापाते च ये दोषा ये च सप्तशलाकके। ते सर्वे प्रभवन्त्यत्र नाम्ना पञ्चशलाकके॥ अथ चक्रात्रये कश्चित् पादवेध इहेष्यते"॥ तदुक्तं रत्नमालायाम्। केचित्तत्रापीष्यते पादवेध इति। इति पञ्चशलाकचक्रम्।

रत्नमालायाम्। "कर्षो द्वादशमुष्णरश्मिरवनीसूनुस्तृतीय गुरुः षष्ठं चाष्टममर्कजस्तु पुरतो हन्ति स्फुटं न लया। पश्चात् सप्तममिन्दुजस्तु नवमं राहुः सितः पञ्चमं द्वाविंशं परिपूर्णमूर्त्तिरुडुपः सन्ताडयेचेतरत्। लत्तापातोऽयम्। "पापात् सप्तमगः शशी यदि भवेत् पापेन वा संयुतो यत्नात्तं परिवर्जयेत् मुनिमतो दोषो ह्ययं कथ्यते। यात्रायां विपदो गृहे सुतवधः चौरेषु रोगोद्भवोऽप्युदाहे विधवा व्रते च मरणं शूलश्च पुंस्कर्म्मणि"।

"रविमन्दकुजाक्रान्तं मृगाद्यात् सप्तमं त्यजेत्। विवाह-

यात्राचूडासु गृहकर्म्म प्रवेशने" ॥ यामित्रवेधः। "मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो मित्रर्क्षसौम्यगृहगोऽथ सदोचितो वा। यामित्रवेधविहितानपहृत्य दोषान् दोषाकरः शुभमनेकविधं विधत्ते" ॥

भोजराजः। "वियद्दशैकादशगो दिनेशः सुतार्थसौभाग्यशुभप्रदः स्यात्। वैधव्यदस्ताष्टमराशिसंस्थः शेषेषु कन्या दुःखप्रदः करोति" ॥ रविशुद्धिः। "कन्यानरत्वगुहो स्यादिवाहः शुभकन्याणाम्। पश्चात् भर्त्तुर्विंशद्वा तु यात्रा पुण्यौत्सवादयः" ॥ विद्याधरीविलासे। "पुंसामर्कः स्मृतो योनिर्योषितामसृतद्युतिः। अतः पुंयोषितोः शस्तं बलमर्कमृगाङ्कजम् ॥ गोचरशुद्धा विन्दुं कन्याया यत्नतः शुभं सौख्यं। सौम्यकिरणस्य पुंसः शेषैरबलैरपि विवाहः ॥ द्वितीयपुत्राङ्गगतः प्रभाकरः त्रयोदशाहात् परतः शुभप्रदः। न जन्मसप्तव्ययरन्ध्रगस्तथा करोति पुंसामपि तादृशं फलम्" ॥ तथा त्रयोदशाहात् परतः। "त्रयोदशदिनान्यर्को दशपञ्चधरणीसुतः। सार्द्धं दिनञ्च सौरांशुर्मासमेकादशं तमः ॥ सौरिः पादाधिकं वर्षं मासानष्टौ बृहस्पतिः। भवनार्द्धं भृगुः सौम्यो यावद्राशिशुभाः फलम् ॥ कष्टं प्रतादिके दद्युर्न तथा शेषभागगाः। लग्ने तत् पञ्चमे तुर्य्ये दशमे नवमे तथा ॥ गुरुर्भृगुर्वा दोषघ्नो विवाहे वर्द्धते सुखम्" ॥ अयमेव सुतहिबुकयोगः।

"गोधूलिं त्रिविधां वदन्ति मुनयो नारी विवाहादिके, हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे। ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां सूर्य्ये चास्तमुपागते च नियतं प्रावृट् शरत्कालयोः। लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकां तत्र शुभां वदन्ति। लग्ने विशुद्धे सति वीर्य्ययुते गोधूलिका नैव फलं विधत्ते ॥ नास्मिन् ग्रहा न तिथयो

न च विष्टिवारा ऋक्षाणि नैव जनयन्ति कदापि विघ्नम्। अव्याहतः सतमेव विवाहकाले यात्रासु चायसुदितो भृगुजे न योगः। मार्गे गोधूलियोगे प्रभवति विधवा माघमासे तथैव पुत्रायुर्धनयौवनेन सहिता कुम्भे स्थिते भास्करे। वैशाखे सुखदा प्रजाधनवती ज्यैष्ठे पतेर्मानदा आषाढ़े धनधान्यपुत्रबहुला पाणिग्रहे कन्यका"। विवाहपटले। "व्यूढा धनुषि च कुलटा तत्पूर्वार्द्धे सतीत्वपरे जगुः"॥ ज्योतिःसारसग्रहे "विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनी"॥ महाभारते। "रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम्"॥ व्यासः। "रिक्तासु विधवा कन्या दर्शेऽपि स्यात् विवाहिता। शनैश्चरदिने चैव यदा रिक्ता तिथिर्भवेत्॥ तस्मिन् विवाहिता कन्या पतिसन्तानवर्द्धिता"॥ स्मृतिः "धर्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः। परीक्षन्ते प्रयत्नेन पूर्वमेव करग्रहात्"॥ मनुः। "अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्"॥ शातातपः "हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम्। तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते"॥ भविष्ये "प्रतिष्ठिततलाः सम्यक् रक्ताभोन्नमनखिषः। तादृशायरणा धन्या योषिता भोगवर्द्धनाः"॥ प्रतिष्ठितौ भूमौ लग्नः समस्ततलोऽधोभागो येषां ते तथा मनुः। "नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोम्नीं न वाचालां न पिङ्गलाम्॥ नर्क्षवृक्षनदी नाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहि प्रेष्यनाम्नीं न च भीषणनामिकाम्"॥ प्रतिप्रसवमाह मत्स्यसूक्ते। "गङ्गा च यमुना चैव गोमती च सरस्वती। नदीस्तासां नाम हृद्ये

मालती तुलसी यदि॥ रेवती चाश्विनीभेषु रोहिणी प्रमदा भवेत्" ॥ तत्त्वचिन्तामणौ। "नेत्रे यस्याः केकरे पिङ्गले वा स्याद्दुःशीला श्यावलोलेक्षणा च। कूपौ यस्या गण्डयोः सस्मितं यो निःसन्दिग्धां बन्धकीं तां वदन्ति" ॥ नन्दिकेश्वरपुराणे। "श्यामा सुकेशी तनुलोमराजी सुभ्रूः सुशीला सुगतिः सुदन्ता॥ वेदी विमध्या यदि पङ्कजाक्षी कुलेन हीनापि विवाहनीया। दुष्टा कुदन्ता यदि पिङ्गलाक्षी लोम्ना समाकीर्णसमाङ्गयष्टिः॥ मध्ये पुष्टा यदि राजकन्या कुलेऽपि योग्या न विवाहनीया" ॥ हारीतः। "तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत्। नक्षत्रोपपन्नां नाडीनक्षत्रहीनाम्"॥

नाडीनक्षत्रमाह स्वरोदये। "अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकम्। तत्र वेधवशात् ज्ञेयं विवाहादिशुभाशुभम्॥ त्रिनाडीवेधनक्षत्रमश्विन्यार्द्रौ युगोत्तरा। हस्तेन्द्रमूलवारुण्यः पूर्वभाद्रपदास्तथा॥ याम्यः सौम्यो गुरुर्योनिश्चित्रामित्रजलाह्वयम्। धनिष्ठा चोत्तरा भद्रा मध्यनाडी व्यवस्थिता॥ कृत्तिका रोहिणी सर्पो मघा स्वाती विशाखके। उत्तरा श्रवणा पौष्णं पृष्ठनाडी व्यवस्थिता॥ अश्वादिनाडीवेधर्क्षं षष्ठं द्वितीयकं क्रमात्। याम्यादितुष्टं तुर्यञ्च कृत्तिकादिद्विषट्ककम्॥ एवं निरीक्षयेद्वेधं कन्यामन्ते कुरे गुरौ। यस्य चौरामिसिद्धेषु देशे ग्रामे पुरे गृहे॥ एकनाडीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः। तदा वेधं विजानीयात् गुर्वादिषु तथैव च॥ प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो व्यधः। प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो वदेत्॥ द्वयोर्जन्मभयोर्वेधो द्वयोर्नामभयोस्तथा। नामजन्मर्क्षयोर्वेधो न कर्त्तव्यः कदाचन॥ एकनाडीस्थिता चेत् स्यात् भर्त्तुर्नाशाय चाङ्गना। तस्मान्नाडीव्यधो वीक्ष्यो विवाहे शुभमिच्छता॥

प्राङ्नाड्या वैधतो भर्त्ता मध्यनाड्यो भयं तथा। पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः॥ एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवता। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्॥ प्रभुः पश्चाङ्गनामिवं देशो ग्रामः पुरं गृहम्। एकनाडी गता भव्या अभव्या वेधवर्जिताः"॥ प्रतिप्रसवमाह ज्योतिषे। "एकराश्यादियोगे तु नाडीदोषो न विद्यते"। स यथा "एकराशौ च दाम्पत्ये शुभं स्यात् समसप्तके। चतुर्थे दशमे चैव तृतीयैकादशे तथा"॥ समषट्काष्टादिसमसप्तके दोषः। तथा च। "घोटके सप्तके मेषतुले युग्मद्वयो तथा। सिंहघटौ सदा वर्ज्यौ स्मृतिं तत्रापि ह्यौस्थिवः"॥ श्रीपतिव्यवहारनिर्णये। "सुहृदेकाधिपयोगे तारावले वश्यराशौ वा। अपि नाड्यादिवेधे भवति विवाहो हिताथाय"॥ राजमार्त्तण्डे। "न राजयोगे षडष्टैरिता च न तारशुद्धिं गणत्रयं स्यात् न नाडीदोषो न च वर्णदुष्टिर्गर्गादयस्ते मुनयो वदन्ति"। राजयोगस्तु एकराश्यादियोग एव तत्रैव नाड्यादिप्रतिप्रसवात्। श्रीपतिरत्नमालायाम्। "अश्वे माजफणिद्वयं श्व वृषभूपौ योन्दुरूमूषिकाखुर्नैः क्रमशस्ततोऽपि महिषो व्याघ्रः पुनः सौरभो"। व्याघ्रेणी मृगकुक्कुरौ कपिरथोरभ्रद्वयं वानरः सिंहोऽश्वो मृगराट् पशुश्च करटोयोनिश्च भानामियम्। गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणयं बभ्रूरग वैरं वानरमेषकश्च सुमहत्तद्विड़ालोन्दुरम्। लोकाना व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः। मकरसमेतं मिथुनं कन्या कलसो मृगेन्द्रमीनौ च। वृषभतुले अलिमेषौ कर्कटधनुषौ च मित्रविधौ"। षट्काष्टकाविति शेषः।

अरिषड़ष्टकमाह। "मकरः करिकुलरिपुणा कन्या

मेषेण सह झषस्तुलया। कर्किघटौ वृषधनुषौ वृश्चिकमिथुने चारिविधौ॥ यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका। षट्काष्टकं विजानीयात् वर्जितं त्रिदशैरपि॥ पुंसो गृहात् सुतगृहे सुतदा च कन्या धर्मे स्थिता सुतवती पतिवल्लभा च। द्विर्द्वादशे धनगृहे धनदा च कन्या रिष्फे स्थिता धनवती पतिवल्लभा च"॥ षडष्टकादौ तारानियममाह भीमपराक्रमः। "सौहृद्ये शुभयोर्द्वयोरपि तयोरैकाधिपत्येऽपि वा ताराषट्शुभमित्रमित्रजन्मक्षेमार्थसम्पद् यदि। षट्काष्टे नवपञ्चके व्ययधने योगे च पुंयोषितोः प्रोत्यायुः सुखबुद्धिपुष्टिजनकः कार्य्यो विवाहस्तदा"। गर्गः। "मरणं तारविरोधे ग्रहरिपुभावे चिरेण। रोगादिनरनार्य्योः षट्काष्टके वैरमवश्यं भवेद्दाम्य"॥ व्यासः। "मैत्रादियोगेऽपि षडष्टकादौ ताराविपत् प्रत्यरिनैधनाख्याः। वर्ज्या विवाहे पुरुषोडुतो हि प्रीतिः परा जन्मसु तारकासु। नक्षत्रमेकं यदि भिन्नराशिर्भं दम्पती तत्र सुखं लभेताम्॥ विभिन्नरक्षं यदि चैकराशिस्तदा विवाहः सुतसौख्यदायी। एकर्क्षं च यदा कन्या राश्येका च यदा भवेत्। धनपुत्रवती नारी साध्वी भर्तृप्रिया सदा॥ षडष्टके गोमिथुनं प्रदेयं कांस्यं सरूप्यं नवपञ्चके ॥। द्विर्द्वादशाख्ये कनकाक्षताग्रं विप्रार्चनं हेम च नाड़िदोषे॥ मरणं नाडीदोषे कलहः षट्काष्टके विपत्तिर्वा। अनपत्यता त्रिकोणे द्विर्द्वादशे दारिद्र्यम्"॥

सत्यचिन्तामणौ। "हस्ता स्वातिश्रुतिमृगशिरः पुष्यमैत्राश्विभानि पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भानि। पूर्वास्तिस्रः शिवभभरणी रोहिणी चोत्तराश्च प्राहुर्मर्त्याह्वयमुडुगणं नूनमेतं मुनीन्द्राः॥ चित्राश्लेषा निरृति पितृभे वासवं वासवर्क्षं शक्राग्न्योर्भं वरुणदहनर्क्षं च रक्षो गणोऽयम्"॥

फलमाह श्रीपतिः "स्वकुले चोत्तमा प्रीतिर्मध्यमा देवमानुषे। देवासुरे कनिष्ठा च मृत्युर्मानुषराक्षसे॥ राक्षसी च यदा कन्या मानुषश्च वरो भवेत्। तदा मृत्युर्न दूरस्थो निर्धनत्वमथापि वा"॥ राजमार्त्तण्डे। "यदि स्याद्राक्षसो भर्त्ता कन्यका मानुषी भवेत्। विवाहे सुखमाप्नोति वैपरीत्यं विवर्जयेत्"॥ युद्धजयार्णवे। "देवा जयन्ति युद्धेन सर्वथा नात्र संशयः। रक्षसां मानुषाणाञ्च संग्रामे नियमा स्मृतिः॥ कर्किमीनालयो विप्राः चेन्द्राः चिहतुला इयाः। वैश्या युग्माजकुम्भाख्याः शूद्रा ह्यपमृगाङ्गनाः॥ सर्वाः परिणयैर्द्विप्रः चत्रियो नवभाग्भवेत्। षडाश्रयो भवेद्वैश्यस्त्रिसः शूद्रे प्रकीर्त्तिताः॥ वर्णश्रेष्ठा च या नारी हीनवर्णश्च यः पुमान्। सद्वत्यपि कुले जाता नासौ भर्त्तरि रज्यते"॥

अथ नववध्वागमनम्। दीपिकायां "सौम्यद्वयालि घटाजसवृतुरथे काले विशुद्धे गुरुं संत्यज्य प्रतिलोमगं शुभदिने यात्रा प्रवेशोचिते। त्यक्त्वा वस्तु निरयकं नववधूयानप्रवेशौ पतिः कुर्य्यादेकपुरादिषु प्रतिभगोर्नेच्छन्ति दोषं बुधाः। पैत्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात् कालः शुक्रो न भवति यदा संमुखो वापि शुक्रः। मेषे कुम्भेऽलिनि च भवेत् भास्करश्चेत्तथापि स्वामी भद्रेऽहनि नववधूं वेशयेन्मन्दिरं स्वम्। भर्त्तुर्गोचरशोभने दिनपतौ नास्तं गते भार्गवे सूर्य्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे। हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ तथा चानीता गुणशालिनी नववधू नित्योत्सवा मोदते। एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति"॥ तथा "काश्यपेषु वशिष्ठेषु भृग्वादित्याङ्गिरःसु च। भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दोषभाक्"॥

श्रीपतिसंहितायां प्रचेताः। "पुष्यादित्यसमीरणादिति वसुसत्युत्तरा रेवती तारानायकरोहिणीषु शुभदो मेषालि-कुम्भे रवौ वारेष्विज्यसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ कन्यामन्मथमीनतौलिमृगभे स्याद्‌द्गना द्वागमः"। नारायण-पद्धतौ "कृते पाणिग्रहे गेहात् पितुः पतिग्रहं प्रति। पुनरा-गमनं वध्वा स्त्रहिरागमनं विदुः"॥ ज्योतिःसारसंग्रहे "विवाह-मासि प्रथमं वध्वा नागमनं यदि। तदा सर्वमिदं चिन्त्यं युग्माब्दं विचक्षणैः"॥ कृत्यचिन्तामणौ। "ऋग्न्यू कन्या-ष्टमे वर्षे स्वग्रहस्य दमाब्दिके। संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे"॥ मत्स्यसूक्ते "भुक्त्वा पितृग्रहे कन्या भुङ्क्ते स्वामिगृहे यदि। दौर्भाग्यं जायते तस्याः प्रपन्ति कुल-नाशिका."॥

अथ प्रथमरजोयोगः। नारायणपद्धतौ। "आदित्ये विधवा नारी सोमे चैव पतिव्रता। वेश्या मङ्गलवारे च बुधे सौभाग्यमेव च॥ बृहस्पतौ पतिः श्रीमान् शुक्रे चापत्यमेव च। शनौ बन्ध्यां विजानीयात् प्रथमे स्त्री रजस्वला॥ पूर्वात्रये याम्यभुजङ्गरौद्रे वैधव्यमस्या विदधाति नूनम्। मघे सशोका-म्यथमेऽदितीशे सा बन्धकीन्द्रोनलभे दरिद्रा। पुष्यं दुष्टं निन्दिते भे यदि स्यात् शान्तिं कुर्यादङ्गनानाञ्च पूर्वम्॥ तत्-संयोगं बान्धवा वर्जयेयुर्यावद्‌ भूयो दृश्यते शस्तभे तत्। ज्येष्ठे स्याद्विधवा नारी आषाढे धनसंयुता। श्रावणे च सुतापत्या भाद्रे च बहुरोगिणी॥ आश्विने च मृतापत्या कार्त्तिके कुल-नाशिनी। मार्गशीर्षे धर्मशीला पौषे च रतिविह्वला॥ माघे पतिव्रता नारी फाल्गुने बहुपुत्रिणी। चैत्रे च मदनोन्मत्ता वैशाखे प्रियवादिनी"॥ इति मासफलम्। "कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टसु लिखेद्बुधः। चत्वारि दिक्षु ऋक्षाणि

कोणेषु च त्रयं लिखेत्॥ पूर्वादिक्रमतो लेख्यं फलं तेनैव निर्दिशेत्। स्त्री वन्ध्या सुभगा चैव विपुला पुत्रिणी तथा॥ विधवा सर्वसम्पन्ना वेश्या चेति क्रमात् फलम्। श्राद्ये रजसि सम्भूते स्त्रीणामेतत्फलं भवेत्"॥ इति नक्षत्रफलम्।

अथ गर्भाधानम्। "ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिकाश्विनी। उत्तरा त्रितयं त्यक्ता पर्ववर्ज्जं मृगेऽष्टमौ"॥ पर्वाण्याह विष्णुपुराणम्। 'चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च"॥ शौनकः "पुन्नक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसू। अभिजित् प्रोष्ठपच्चैवानुराधाषाढयाम्ययुक्॥ हस्तो मूलं श्रवणं पुनर्वसुर्मृगशिरस्तथा पुष्यश्च गर्भाधानादिकार्य्येषु पुन्नामाय गणः शुभदः। रोहिण्यन्तकर्णचित्राश्विविशाखा अतवर्जिते। मे पुयदाड़े स्त्री शुद्धा फलवत्यनमिष्यते॥ पुष्यार्कचन्द्रशिव मूलपुनर्वसू स्यादाषाढयुग्महरिभाद्रपदद्वयश्च। एतानि पुंसि कथितानि शुभानि भानि चान्येषु गर्भपतनादिभयञ्च भेषु। नन्दा भद्रा भवेत् पुंसि स्त्रीषु पूर्णा जया स्मृता। रिक्ता नपुंसके लाङ्गुल्याख्यास्ता परिवर्जयेत्। स्त्रीणामृतुर्भवति षोडश वासराणि तत्रादितः परिहरेच्च निशाचतस्रः। युग्मासु रात्रिषु नराविषमासु नार्य्यः कुर्य्यान्निषेकमथ तास्वपि पर्व वर्जम्। मूलर्चं स्मृतिदुष्टत्वाद्गर्भाधानेषु नश्यते। तस्य पुंसवनादौ तु पुंसत्वे प्रयोजनम्"। यथा याज्ञवल्क्यः। "एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च वर्जयेत्। सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्"॥ क्षामाम् आहारलाघवादिना क्षीणाम्। फलञ्च "युग्मासु पुत्रा जायन्ते स्त्रियो युग्मासु रात्रिषु। तस्माद् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः"

इति मनूक्तम्। एवञ्च "युग्मायामपि राशौ चेत् योषितं प्रचुरं तदा। कन्या पुंवद्भवति शुक्राधिक्ये पुमान् भवेत्॥ कन्यैव युग्मराशौ च प्राधान्यं समवायिनः। निमित्तकारणात् कालाच्छुक्रशोणितयोर्यतः॥ पीडा राशौ भौमदृष्टे शशाङ्के मासं मास योषितामार्त्तवं स्यात्। तंत्रशे शान्तं यत्र रक्तं जवाभं तद्गर्भीयं वेदनागन्धहीनम्"॥ गर्भयोग्य ऋतुनिरूपणम्। "पापासंयुतमध्यगेषु दिनकृत् लग्नपा स्वामिषु तद्युतेषु शुभोज्झितेषु विकुजे छिद्रे विपापे सुखे। सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते पापे युग्मनिशासु गण्डसमये पुंस्त्रितः सङ्गमः। मूलमघाश्विनीनामाद्यं ज्येष्ठान्त्यसर्पाणाम्। अन्त्यं गण्डपद त्यक्त्वा षोडशाहे ऋतौ व्रजेत्। चण्डीशौ तु भुजबलभीमे "अन्त्य पौष्णेन्द्रसर्पाणामाद्यं पित्र्यश्विमूलगम्। गण्डं दण्डत्रयं ख्यातं सर्वकार्य्येषु वर्जितम्। पुमान् विंशतिवर्षेत् पूर्णषोडशवर्षया। स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि। अपत्यं जायते भद्रं तयोर्न्यूनेऽधम स्मृतम्। 'मासेशैः सितकुजगुरुरविशनिसौम्यलग्नपशशीनैः कलुषैः पीडा गर्भस्य पीडितैः पतनमन्यथा पुष्टिः"॥ कालुष्यं मासेशेन पापग्रहयोगशत्रुगृहास्थिति नीचग्रहयोग उपग्रहयोगादि। मासेशजन्मनक्षत्रे पापग्रहयोगः पीडा येषां जन्मर्क्षाणि १६। ३। २०। २२। ११। ८। २७। २। मासेशशान्त्यादौ कृते न गर्भपीडा। अथ प्रश्नात् पुत्रादिज्ञानम्। "विवाहलग्न विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात्। स्त्र्यादिग्रहाणामवलोक्य वीर्य्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा"।

अथ षोडशवर्षीया गर्भिणीचिन्ता। "या सूता षोडशे वर्षे तत्र वा मृतगर्भिका। मृत्युस्तस्याः सपुत्रायाः पितुश्चापि च सम्मतः॥ मांसीप्रियङ्गुरजनीगुग्गुलुर्वंशलोचना। तालिशेन

तिलान्लाजा गर्भिणीस्नानमुत्तमम्॥ गौरीं सम्पूज्य तत्पश्चात् सङ्क्रमिच्छिवसन्निधौ। कार्गी गर्भवती देया देवज्ञायाथ गोयुगम्। काश्यपावस्थितं चन्द्रं सितवस्त्रासमयुतम्। वस्त्रैः कर्णैश्च शतपुष्पैश्चन्दनागुरुधूपकैः। कृत्वापमार्जयेन्नारी भोजयेद् ब्राह्मणांस्ततः"॥

अथ पुंसवनम्। "कुर्यात् पुंसवनं सुयोगकरणे नन्दे सभद्रे तिथौ भाद्रापाढनृभेश्वरेषु नृदिने वेधं विनेन्दौ शुभे। चन्द्रेऽपि नवपञ्चकण्टकगते सौम्ये शुभे हृद्विषु स्त्रीयुक्तं घटयुग्मसूर्य-गुरुभेष्वृक्षस्य मासत्रये"॥ नृदिने पुंग्रहवारे। वेधो दृश्ययोग-भङ्गः। हृद्विषु पञ्चमस्थानम्।

अथ पञ्चामृतम्। "रेवत्यश्विपुनर्वसुद्वयमकग्मूलानुराधा-मघाहस्तास्तूत्तरफल्गुषु मृगजे जीवार्कवारे तथा। लग्नर्क्षे शुभयोभने च नियतं सन्त्यज्य रिक्तां तिथिं न देयं मासि तु पञ्चमे सुकरणे पञ्चामृतं योषिताम्। दुग्धं सशर्करं चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तं विधेयं सर्वकर्मसु"॥

अथ सीमन्तोन्नयनम्। "षष्ठे मासिऽष्टमेऽह्नौक्यकुजदिन-हतां नन्दभद्रे तिथौ च मैत्रे मूले मृगाद्ये करपित्र्यवने पौष्णविष्णुत्रियुग्मे। तिथ्याख्यादित्यरौद्रे युवतिहरिभेऽपि हृद्विके वापि लग्ने चन्द्रे ताराऽनुकूले शुभमपि नियतं स्याच्च सीमन्तकर्म"। त्रियुग्मे पूर्वोत्तरत्वेन युग्मरूपासु फल्गुन्या पाढभाद्रपदासु। "क्रूराजरहिते लग्ने नवांशे पुंग्रहस्य च। केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे तिथौ"॥ ग्रहलिखितौ वस्त्रदानं नववध्वे। "मघाष्टकेऽम्बुवितयेऽदितिद्वये पौष्णद्वये धातृयुगे गुरूदये। मासे च षष्ठेऽथ चतुष्टये स्त्रिया. शुक्राग्र-मन्दाच्च वह्निर्धटी शुभा"॥ गर्भस्पन्दने सीमन्तोन्नयनं यावन्न बालप्रसव इति। भुजबले "श्रीफलञ्च करे दत्त्वा स्थित्वा

भद्रासने तथा । शङ्खोदितेन होमञ्च शान्तिं चैवात्र कारयेत् ॥ ऊर्णासूत्रेण संग्रथ्य जीवं जातिञ्च विद्रुमम् । गुवाकं रजतं हेम दद्यात् स्नानतटान्तरे ॥ ततप्रभृतिनदीतीरं देवखातोदकं त्यजेत् । सम्याटनं तरोर्मूलं तथा देवगृहं त्यजेत्" ॥ इह द्वानमार्त्तण्डे । "या नार्य्यः सप्तसीमन्ता प्रसूते च कदाचन । चाङ्के निधाय तं बालं पुनः संस्कारमर्हति" ॥ अतएव छन्दोगपरिशिष्टं "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन । हुत्वैतदेव कुर्वीत ये तूपनयनादधः" ॥ इति सामान्यत उक्तम् । देवलः "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता" ।

अथ जातभद्रादि । तत्र दन्तजन्मचिन्ता । "जातः सदन्तः पितृमातृहन्ता तातं विहन्यात् प्रथमे तु मासे । भ्रात्रीं द्वितीये सहजं तृतीये मासे चतुर्थे शुभकारकः स्यात् ॥ मिष्टान्नभोजी सुभगः सुताद्ये षष्ठे सुखी पण्डितकल्पबुद्धिः । ततोऽधिकः स्याद्धनवान् गुणाढ्यो मासेऽष्टमे वित्तसुखैर्विहीनः । सुरप्रतापो नवमे मृत्युञ्च दशमे तथा ॥ एकादशे द्वादशे च सुखी च सुभगो भवेत् । षष्ठीं पुत्त्रलकान् कृत्वा सुगन्धैर्गन्धकैस्तथा ॥ स्रोतसु सङ्गमे चापि स्नापयेत् शुक्लपुष्पकैः । स्नानं सङ्गमस्याधः शम्भोर्दर्शनमन्ततः ॥ होमं विप्रार्चनञ्चैव मशुभे दन्तदर्शने" ॥

प्रसवात् पूर्वं गृहसंस्कारमाह सांख्यायनगृह्यम् । "काकादन्या मेचकधातक्या हृहत्या: कोपातक्याः कालक्लीतकयोरिति मूलानि पेषयित्वा उपलेपयेद्‌गृहं यस्मिन् प्रजायते रक्षसामपहत्यै" इति । काकादनी काकजङ्घा मेचकधातकी काकमोचिका कोपातकी घोषकः कालक्लीतकाः यष्टिमधुकेति कल्पतरुः । अतएव हरिवंशे । "एष मानुष्यको यत्नो मानुषैरेव साध्यते । व्ययता येन दैवं हि मद्विधैः प्रति-

इष्यते । मन्त्रयामैः सुविहितैरौषधैश्चैव योजितैः । यत्नेन चानुकूलेन दैवमप्यनुलोम्यते"। इत्यनुचरान् प्रति कंसवाक्यम् । "अस्ति गोदावरीतीरे जम्भला नाम राक्षसी । तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत् । पञ्चरेखाः समुल्लिख्य तिर्य्यगूर्द्ध्वक्रमेण हि । पदानि षड्दशापाद्य लेकमाद्ये मुनौ त्रयम् । नवमे सप्त दद्यात्तु वाणं पञ्चदशे तथा । द्वितीयेऽष्टावष्टमे षट् दिशि द्वौ षोडशे श्रुतिम् । एकादिना समं देयम् इच्छाईाङ्क त्रिकोणके । तदा द्वात्रिंशदादिः स्यात् चतुः कोष्ठेषु सर्वतः । दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्म्मसु । द्वात्रिंशत् प्रसवे नार्य्याश्चतुस्त्रिंशद्गमे नृणाम् । भूताविष्टेषु पञ्चाशत् मृतापत्यासु वै शतम् । द्वासप्ततिस्तु सन्ध्यायां चतुःषष्टीरणाहमि । विषे विंशो धान्यकोटेऽष्टाविंशतिरेव च । चतुरष्टौ च बालानां रोदने परिकीर्त्तिता" भौमपराक्रमे "वाच्यं शिशोर्जन्मपितुः परोक्षं चन्द्राकरे प्रस्नति नैव लग्नम् । चरस्थितेऽर्कोऽष्टमधर्म्मगे वा जातः परोक्षे पितरीति वाच्यम् । लग्नस्थिते वा दिननाथभूमौ यामित्रमस्येऽप्यथवा महीजे । चन्द्रे च शुक्रेन्दुजमध्यगे वा विदेशसंस्थे पितरि प्रजातः । सुखप्रसूतिर्भवेच्चन्द्रे शुभग्रहयुतेक्षिते । दुष्टैर्वीक्षितयुक्ते च प्रसूतिर्दुःखदा भवेत् । द्वारं वास्तुनि केन्द्रोपगात् ग्रहाद्बलिनो वा विलग्नर्क्षात् । दीपोऽर्कादुदयाद्वर्त्तिरिन्दुतः स्नेहनिर्देशः । लग्ने याहिरशामस्तदभिमुखं सूतिकागृहद्वारम् । वासगृहोद्यानगतं द्वारं दिग्वलिग्रहाद्वलोपेतात् । द्वादशभागविभक्ते वासगृहे व्यवस्थिते सहस्रांशौ । दीपचरस्थिरादिषु तथैव वाच्यः प्रसवकाले । लग्नस्य यस्तु वर्णो निर्दिष्टो वर्त्तिस्तेन निर्देश्या । यावान् भागःक्षयमुपगतो दीपवर्त्तेय । तथाऽस्तावच्छशि क्षयमुपगते लग्नराशेः प्रसूतिः । इन्दोर्भागवशाद्राशौ दीपे तैलस्य संस्थितिः । केचित्

पूर्णादिभेदेन वदन्त्येवं मनीषिणः। मेषे चापमृगेन्द्रयोः किल शिशुः प्राची शिरा जायते गोकन्या मकरेषु दक्षिणशिरा जातो भवेन्निश्चितम्। मीने वृश्चिककर्किणोर्यदि तदा कौवेर-मूर्द्धा भवेत् कुम्भर्क्षे घटयुग्मयोर्यदि तदा पाश्चात्यमूर्द्धा नतः। युग्मायुग्मलग्नवशात् प्रसवस्य च कारिणी। विधवा सधवा ज्ञेया क्रमात् खलु विचक्षणैः"। बृहज्जातके। "मेषकुलीर-तुलालि घटैः प्रागुत्तरतो गुरुसौम्य गृहेषु। पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ। वासुदेवे प्रागादिगृह-प्रसवस्थानम्। द्वौ द्वौ राशी मेषात् पूर्वादिषु संस्थितौ गृह-विभागौ। कोणेषु द्विशरीराणि लग्नस्थाने शिशोः शयनानि"। गृहस्य प्रागादिदिग्विभागे बालस्य शय्या। लग्ननवांशकतुल्य-तनुः स्यात् वीर्ययुतग्रहतुल्यतनुर्वा। चन्द्रसमे तु नवांशपवर्णः कादिविलग्नविभक्तभगात्राः। लग्नादयोराशयः कादिषु शिरः प्रभृतिगात्रेषु परिकल्प्य तेन तदधिपात्तदैर्घ्यादिभेदात् तद-ङ्गाना तथा। यथाह सत्यः। दीर्घं यतिदीर्घं गृहस्थितोऽवयव-दीर्घं करुवति। भिन्नस्ते भिन्नफलमेवमन्येषु वाच्यम्। कदृक्-श्रोत्रनसाकपोलहनवो वक्त्रञ्च होराद्यस्ते कण्ठांशकबाहुपा-र्श्वहृदयक्रोडानि नाभिस्ततः। वस्ति शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी। जङ्घाङ्घ्री ह्युभयत्र वाममुदितैर्द्रेक्काणभागै-स्त्रिधा। लग्नादयो राशयस्त्रिधा द्रेक्काणभागैस्तत्र प्रथमे शीर्षा-दयो भवन्ति ते लग्नादयः द्वितीये कण्ठादयः तृतीये वस्त्या-दयः उदितैरुदय प्राप्तैर्भुक्तैरिति यावत्। तैर्दादशभिः राशि-भिर्वामसङ्गमिति ज्ञेयः। अर्थात् द्वितीयादिभिर्भागैर्दक्षिणं तेन लग्नात् द्वितीयो राशिर्दक्षिण चक्षुः द्वादशश्च वाममित्यादि ज्ञेयम्। "तस्मिन् पापयुते व्रणं शुभयुते सौम्यं हि लक्ष्मादि-शेत्। स्वर्क्षांशे स्थिरसंयुतेषु सहजः स्यादन्यथा गन्तुकः।

मन्देऽष्वानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः सूर्य्ये काष्ठ-चतुष्पदेन हिमगौ शृङ्गजलजोऽन्यैः शुभः"। तस्मिन् द्रेक्काणे। द्रेक्काणस्थितग्रहफलनिर्णयः। "शीर्षमुखबाहुहृदयोदराणि कटिवस्तिगुह्यसंज्ञकानि। ऊरुजानुकजङ्घे चरणाविति च राश्योऽऽजाद्याः। इति कालनरस्याङ्गे सदसद्ग्रहयोगतः। पुंसामपि तदङ्गेषु शुभाशुभफलं वदेत्। न लग्नमिन्दुञ्च गुरु-र्निरीक्षते न वा शशाङ्कं रविणा समायुतम्। सपापकोऽर्केण युतोऽथवा शशीपरेण जातं प्रवदन्ति निश्चयात्। भग्नपाद-र्चसंयोगात् द्वितीया द्वादशी यदि। सप्तमी चार्कमन्दारे जायते जारजो ध्रुवम्। जारजयोगः। "गुरुक्षेत्रगते चन्द्रे तद्युक्ते वामवेश्मनि। तद्रेक्काणे नवांशे वा जायते न परेण स."। जारजयोगभङ्गः इति लग्ननिर्णयः।

"यादृक् पश्यति सौम्यस्तत्तुल्यगुणं सुतं समाधत्ते। पितृ-जननीसादृश्यं रवेः शशाङ्काच्च बलयोगात्। सत्त्वं रजस्तमो यत्तु त्रिंशांशे रविस्तादृक्"। एतेऽन्तरात्मानः स्वां प्रकृतिं जन्तोः प्रयच्छन्ति सत्त्वादिप्रदानि शांशके रविस्थित्या सात्त्वि-कादिज्ञानम्। विष्णुधर्मोत्तरे। "तामसा राजसाश्चैव सात्त्विकाश्च तथा स्मृताः। मनुष्या भृगुशार्दूल वातपित्त-कफाधिकाः।

अथ गण्डयोगः। "अश्विनीमघमूलानां गण्डा आद्या-स्त्रिनाडिकाः। अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव यवना जगुः। मूलेन्द्रयोर्दिवागण्डो निशायां पित्र्यसर्पयोः। सन्ध्याद्वये तथा ज्ञेये रेवतीतुरगद्वयोः। सन्ध्याराचि दिवाभागे गण्डयोगो-द्भवः शिशुः। आत्मानं मातरं तातं विनिहन्ति यथाक्रमम्। सर्वेषां गण्डजातानां परित्यागो विधीयते। तातेनादर्शनं तावि यावत् पाण्मासिको भवेत्। कुङ्कुमं चन्दनं कुष्ठं गोर-

घनमयापि वा। घृते नैवान्वितं कृत्वा चतुर्भिः कलसैर्बुधः। सहस्राक्षेण मन्त्रेण बालकं स्नापयेत्ततः। पितृयुक्तं दिवाजातं मातृयुक्तञ्च रात्रिजम्। स्नापयेत् मातृपितृभ्यां सन्ध्ययोरुभयोरपि। कांस्यपात्रं घृतैः पूर्णं गण्डदोषोपशान्तये। दद्याद्धेनुं हिरण्यञ्च ग्रहांश्चापि प्रपूजयेत्। मूलायाः प्रथमे पादे पितुर्वपुः प्रणश्यति। द्वितीये नियतां पीडां मातुः कुर्य्यात् पितुस्तथा। तृतीये धननाशाय चतुर्थे सर्वसम्पदः। व्यत्ययेन फलं ज्ञेयमश्लेषास्वपि पूर्ववत्। वल्मीकमृत्तिकां दद्यात् नशाय तटमृत्तिकाम्। गोविषाणमृदञ्चैव दन्तिमृदञ्च निक्षिपेत्। तीर्थाम्भः पञ्चगव्येन स्नानं मातुः पितुः शिशोः। दिवा जाता तु या कन्या निशि जातस्तु यः पुमान्। नोभयोर्गण्डदोषोऽस्ति मातुलो हन्ति पर्वतम्। दिवागण्डे निशाजातो निशिगण्डेऽथवा दिवा। नोभयोर्गण्डदोषः स्यात्तावली हन्ति पर्वतम्" ॥ इति गण्डनिर्णयः। "मयूरचूलिकामूलमादित्यप्रचयोद्धृतम्। बालस्य च गले बद्धं समस्तग्रहदोषहृत्"॥ मयूरचूलिका अपामार्गः। "ग्रन्थोत्पलवचा कुष्ठं लक्ष्मीदविधारणम्। सर्वोपद्रवतो बालं स्वेडादपि च रक्षति ॥ अर्कदुग्धं निशा शुण्ठी गोघृतेन विलेपनम्। सर्वोपद्रवदोषेभ्यो बालं रक्षति सन्ततम् ॥ मागधिकासैन्धवसुरभिपित्तमधुमरिचरचितमतिप्रकटम्। भूतहरमञ्जनमिदं दुर्धरग्रहदर्पविदारणम् ॥ सुरभिपित्तं गोपित्तं मागधिका पिप्पली। दारुहरिद्रा पुष्ये प्रचरसेन मर्दयित्वा रचिता ॥ अञ्जनगुटिका ग्रहवृन्दवन्दिता भूतविद्रावणी प्रचरसेन कुष्माण्डरसेन।

अथ पताकावेधः। "तिर्य्यगूर्द्धंगता रेखास्तिस्रो देयाः पताकया। युताः कार्य्या वेदविदा सर्वसङ्कतरेखया ॥ दक्षस्योर्द्धतरेखातो वाम मेषाद्यराशयः। पश्चाद्युग्मविभाग

षड्दशेन्द्राग्निसागराः ॥ कर्कटान्मीनपर्य्यन्तमङ्का देया यथाक्रमम्। बालस्य जन्मकालीनग्रहलग्नमजादिषु ॥ विन्यस्य चिन्तयेत् प्राज्ञः शुभाशुभं यथाक्रमम्। शुभदण्डयोगवेधैर्लग्नाद्बालस्य शोभनम्। पापदण्डयोगवेधैराश्वङ्का दृष्टिकालवत्। बलाधिके दिनं मध्ये मासो हीने च हायनम्। कर्किमीनधनुर्भ्याञ्च हरिः कीटघटेन च। स्त्रियास्तौलिमृगाभ्याञ्च घटे मीनेन कन्यया। धनुषो मृगकर्किभ्यां मकरे धनुषा स्त्रिया। मीने कर्किंतुलामृद्भ्यां मीनस्त्रीधनुषाऽजगे। तुलाकर्किमृगेद्वन्द्वे कीटकुम्भवृषेषु च। सिंहवद्वेध एतेषु वामदक्षिणसम्मुखे। राहुकेत्वर्कसौरारैः पापैर्विद्धो युतोऽशुभः। तदन्यैर्युतविद्धस्तु भवनराशिः शुभप्रदः। एकोनविंशतिः कर्के सिंहे समदशैव तु। षट्त्रिंशदन्त्यायाञ्च षड्विंशतिस्तुलाधरे। वृश्चिके सिंहवत् ज्ञेय मूलत्रिंशच्चरासने। षड्विंशं मकरे ज्ञेयं कुम्भे सप्तदश स्मृता। नवयुग्मे तथा मीने मेषे षड्दशभिस्तथा। वृषभे च यथा सिंहे युग्मेऽङ्कद्वरलोचने। त्रितयाङ्कादियं संख्या दिनमासाब्दनिर्णये। एकाङ्कात् द्विद्व्यङ्काद्वा क्वचित् दृष्टेव सम्भवः। वारेशादर्द्धयामेषु रात्राङ्कोः पञ्चपट् क्रमात्। अधिपाः सूर्य्यहाश्चैव यथार्काहि भवन्ति हि। वरौर्कन्दुभृगुज्ञाजयनिशाखयो निशि। रवियमकृतरात्रौशशनौज्यकुजभास्कराः। दिने तृष्णाः परेष्वेवं तथा कद्भायतुर्यहाः। पापदण्डे मनोद्रिष्टिः शुभदण्डे शुभं भवेत्। शुभग्रहस्य दण्डे तु कर्मारम्भाच्छुभं भवेत्। पारम्भात् पापदण्डे तु कर्म्म निष्फलतां व्रजेत्। यस्यार्द्धयामस्त स्यैव प्राग्दण्डः समुदाहृतः। पट्पट् परीत्य दण्डाय शयो राशौ मतास्तथा। आदित्ये भृगुजो बुधोऽपि च शशी सोमे शनौर्ज्यो कुजो भौमेऽर्कः सितसोमजौ च शशिजे सोमः शनिर्वाक्पतिः।

जीवेऽङ्गाररवी भृगुर्भृगुसुते सौमेन्दुमार्त्तण्डजाः। काले जीवमहीजतिग्मकिरणा रात्रौ च दण्डाधिपाः। यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः। तदर्द्धात्तु तृतीयः स्यात्तदर्द्धात्तु तुरीयकः। अन्त्यार्द्धे तु राहुः स्यात्तदर्द्धो मधुसंज्ञकः। अन्त्याह्नस्य परित्यागाद्दिवादण्डाधिपा यथा। रविदनुजबुधज्ञौषन्द्रसुरासुरज्ञा कुजरविदनुजज्ञाः शैन्दुसुरासुराय। गुरुशनिरविदैत्याः शुक्रभौमार्कदैत्याः शनिकुजरविदैत्या दण्डपायर्द्धयामे"। दनुजो राहुः। अर्द्धयामे। दिनार्द्धप्रहरे। शुभदण्डमाह। "शेषावर्कस्य दण्डौ सततशुभकरावादिशेषौ तथेन्दोः शेषो दण्डः कुजस्याप्यथ गुरुबुधयोराद्यमाद्यं प्रशस्तम्। चादिदण्डस्तथैको भृगुकुलनृपतेः सर्वकार्य्ये हि शस्ताः। दण्डाश्चत्वार एते क्वचिदपि समये नैव सौरेः प्रशस्ताः। प्रतिदण्डं पताकेषां ज्ञात्वा वाच्यं कथिच्छुभम्। रवौ च वेदा वसवः सुधांशौ कुजे चराणां शशिजे तथाङ्काः। शनाङ्गतुर्दिक् च बृहस्पतौ स्याद्राहौ तुरङ्गा भृगुजे च रुद्राः। चशुभे दण्डसंयोगे सर्वत्र पुण्यवर्जिते। बालस्य मरणं शीघ्रं यदि पापैः समन्वितम्। चशुभग्रह दण्डे तु सर्वत्र पापवर्जिते। बालस्य कुशलं सर्वं शुभैर्यदि समन्वितम्। चशुभे दण्डनाथे हि वेधयोगेन लभ्यते। मरणं तत्र वक्तव्यं बालस्य नान्यथा भवेत्। पापस्य दण्डमात्रे तु तद्योगवेधवर्जिते। बालस्य कुशलं तत्र शुभैर्यदि समन्वितम्"। इति पताकावेधः।

"पापास्त्रिकोणकेन्द्रे सौम्याः षष्ठाष्टमव्ययगताः। सूर्य्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः"। सूर्य्यरिष्टम्। "षष्ठेऽष्टमे च चन्द्रः सद्यो मरणाय पापसंदृष्टः। चष्टाभिश्च शुभैर्दृष्टो वर्षैर्मिश्रैस्तदर्द्धेन"। चन्द्ररिष्टम्। "सुतमदनवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः। भृगुसुतशशिपुत्रदेव

पूर्ण्यैर्यदि बलिभिर्न युतोऽवलोकितो वा" । पापयुतचन्द्रारिष्टम् । "द्यूनचतुरस्रसंस्थे पापद्वयमध्यगे शशिनि जातः। विलयं प्रयाति नियतं देवैरपि रक्षितो बालः" । पापमध्यगचन्द्ररिष्टम् । "क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्युसंस्थैर्वा । भवति विपत्तिरवश्यं यवनाधिपतेर्मतञ्चैतत्" ॥ क्षीणचन्द्ररिष्टम् । "नाग ८ । गो ९ । शिव २४ । जाती २२ । इषु ५ । क्ष्मा १ । अब्धि ४ । अश्वि २२ । धृति १८ । नखाः २० । क्ष्माग्नि २१ । दिक् १० । चैत्रजाद्यशी तनुव्याच्चेविधौ व्यसुः" । मेषादीनां विशांशविशेषस्थचन्द्ररिष्टम् । "भौमे विलग्ने शुभदैरदृष्टः षष्ठेऽष्टमे वार्कसुतेन युक्तः । सद्यः शिशुं हन्ति यदेन्दुनोन्द्रः क्रूरे यमारौ न शुभे स्थितौ च" । त्रिविधभौमरिष्टम् । "कर्कटधामनि सौम्यः षष्ठाष्टमराशिगोविलग्नात् । चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्टयेन मारयति"॥ बुधरिष्टम् । "बृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिः । वर्षैस्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम्" ॥ बृहस्पतिरिष्टम् । "रविशशिभवने शुक्रो द्वादशरिपुरन्ध्रगोऽशुभैः सर्वैः । दृष्टः करोति मरणं षड्भिर्वर्षैः किमिह विचित्रम्" ॥ शुक्ररिष्टम् । "मारयति षोडशाहात् शनैश्चरः पापवीक्षितो लग्ने । संयुक्तो मासेन वर्षाच्छुभस्तु मारयति" ॥ त्रिविधशनिरिष्टम् । "राहुश्चतुष्टयस्थो मरणाय वीक्षितो भवति पापैः । वर्षैर्वदन्ति दशभिः षोडशभिः केचिदाचार्याः ॥ षटसिंहवृश्चिकोदयक्षतस्थितिर्जीवितं हरति राहुः । पापैर्निरीक्ष्यमाणः सप्तमितैर्निश्चितैर्वर्षैः" । राहुरिष्टम् । "केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तुः । रौद्रे सर्पमुहूर्त्ते वा प्रायैः संत्यजते प्राणं" ॥ केतुरिष्टम् । लग्ने ये द्रेकाणा निगड़ाहिविहङ्गपाशधरसंज्ञाः । मरणाय सप्तवर्षं क्रूरयुतान्

स्वपति दृष्टाः। द्रेक्काणरिष्टम्। "मीनकर्कटयोरन्त्यौ वृश्चिकस्याद्यमध्यमौ। सर्पायत्वार एवैते द्रेक्काणा निगडाय ते॥ तुलामध्यान्त्यसिंहाद्य कुम्भाद्याः पक्षिणः स्मृताः। हयाद्यमकरादन्त्या द्रेक्काणाः पाशधारिणः॥ लग्नाधिपजन्मपती षष्ठाष्टमरिपुफगौ प्रसवकाले। अस्तमितौ मरणकरौ राशिसमितैर्वदेद्दर्षैः"॥ जन्मपतिर्जन्मराश्यधिपः लग्नाधिपजन्माधिपरिष्टम्। "सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपगतैर्दृष्टाः। मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः"॥ सौम्यग्रहरिष्टम्। "एकः पापोऽष्टमगः शत्रुगृहे शत्रुवीक्षितो वर्षात्। मारयति नरं प्रसूतं सुधारसो येन पीतोऽपि"॥ पापग्रहरिष्टम्। "होरायाः सप्तमे सौरिर्हिबुकस्थश्च भास्करः। अस्मिन् योगे तु यो जातः सोऽल्पायुर्भवति प्रिये॥ वसुषष्ठगते जीवे सप्तसप्तगते शनौ। द्वादशस्थो यदा भानुर्वर्षमेकं न जीवति॥ प्रतिपद्युत्तराषाढ़ा नवम्यामेव कृत्तिका। पूर्वभाद्रपदष्टम्यामेकादश्याञ्च रोहिणी॥ द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा। एभिर्जातो न जीवेत यदि शक्रसमो भवेत्"॥ इति मिश्ररिष्टम्।

"लग्नाच्चतुर्थगः पापो यदि स्याद्बलवत्तरः। तदा मातृवधं कुर्य्यात्तत्केन्द्रे चापरो यदि॥ केन्द्रत्रिकोणगः पापो मातृहा सप्तवासरात्। सपापात् भार्गवात् पापो हिबुके मातृनाशकृत॥ चन्द्रमा यदि पापेन त्रयेणैवेह वीक्षितः। मातृनाशो भवेत्तस्य षष्ठः पापो भवेद् यदा"॥ इति मातृरिष्टम्। "कर्मस्थाने स्थिते सौम्ये रिपुस्थाने च चन्द्रमाः। कुजे च सप्तमस्थाने म्रियते पितृसञ्ज्ञकः॥ तमोहा यदि पापेन त्रयेणैव हि वीक्षितः। शुभैरयुतदृष्टश्च पितुरप्यन्तमादिशेत्"॥ इति पितृरिष्टम्। "लग्नाच्चतुर्थो रविजाऽथ भौमः कर्मस्थितो मातृवियोगदुःखम्। ददाति शीघ्रं खलु सप्तमे च तातस्य

मृत्युं यदि सप्तमसंस्थः ॥ दिवाकरेन्दोः व्ययगौ कुजार्कजौ रोगप्रदौ पुंगवयोषितस्तदा । व्ययस्थगौ मृत्युकरौ युतौ यदा तदेकदृष्टा मरणाय कल्पितौ ॥ यमवक्रौ द्युने चार्कात् पुंसो रोगप्रदौ स्त्रियाश्च चन्द्रात् । सप्ताष्टमगयोर्न्नृणस्तदेकयुतदृष्ट-योर्यापि" ॥ इति माता पितृहायोगः ।

"एकोऽपि केन्द्रभवने नवपञ्चमे वा भास्वन्मयूखविमली-कृतदिग्विभागः । निःशेषदोषमपहृत्य शुभं प्रसूतं दीर्घायुषं विगतरोगभयं करोति" ॥ सर्वरिष्टभङ्गः । "सौम्यपदैरति-बलैर्विबलैश्च पापैर्लग्नञ्च सौम्यभवनं शुभदृष्टिदृष्टम् । सर्वा-पदा विरहितो भवति प्रसूतः पूजाकरः खलु यथा दुरितै-र्ग्रहाणाम् ॥ चन्द्रः पूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यांशे । प्रकरोति रिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ सौम्यद्वयान्तरगतः संपूर्णस्निग्धमण्डलः शशभृत् निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुड इव । स्वोचस्थः स्वदृक्काणेऽपि वा स्वमुहूर्ते वर्गेऽपि सौम्ये-ऽपि वा संपूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽपि वा । अनूणामवलोकनेन रहितः पापैरयुक्तः स्थितो रिष्टिं हन्ति सुदुस्तरां दिनपतिः प्रालेयराशिं यथा ॥ शुक्रः षष्ठसहस्राणि बुधः षष्ठशतानि च । लक्षमेकन्तु दोषाणां हन्याच्चैवोदिते गुरुः ॥ सप्ताष्टषष्ठाः सौम्या हरन्ति शशिनः कष्टफलम् । पापैरमिश्रचाराः कम्पमपहूत यथोन्मादम् ॥ पक्षे सिते भवति जन्म यदि क्षपायां कृष्णे तथाहनि शुभाशुभदृष्टमूर्तिः। तं चन्द्रमा रिपुविनाशगतोऽपि यत्नादापत्सु रक्षति पितेव शिशुं न हन्ति । तुलाकोदण्डमीनस्थो लग्नस्थश्च शनिर्यदा ॥ सर्वरिष्टं निहन्त्याशु शिशौ जातो भवेद्वशः । राहुस्त्रिषष्ठलाभे लग्नात् सौम्यैर्निरीक्षितः सद्यः नाशयति सर्वरिष्टं मारुत इव तूल-सङ्घातम् । मेषवृषभकर्कितलग्ने रक्षति राहुः समस्तरिष्टिभ्य. ।

क्रूरः स्वल्पेऽप्यपराधे बहुवैरानुबन्धकृत्"। इष्टवियोगानिष्टप्राप्तौ चित्तस्य यथा पूर्वमवस्थानम्। अस्थिरविभूतिमित्रं चलमटनं स्खलितनियममपि चरभे। तद्विपरीतं क्षमान्वितं दीर्घसूत्रञ्च। द्विशरीरे त्यागयुतं कृतज्ञमुत्साहिनञ्च विविधचेष्टम्। ग्राम्यारण्यजलोद्भवराशिषु जातास्तथा शीलाः। अदीर्घसूत्रश्च भवेत् सर्वकर्मसु पार्थिवः। दीर्घसूत्रश्च भूपतेः कर्मनष्टं भवेत् ध्रुवम्। रागे दर्पे च माने च द्रोहे पापे च च कर्मणि। अप्रिये चैव कर्त्तव्ये दीर्घसूत्रं प्रशस्यते"॥ इति राशिफलम्।

अथ जन्मनक्षत्रफलम्। "शतानलादित्यशिवाख्यमैत्रशक्रोद्भवामित्रगुणाः प्रदिष्टाः। शिवाजहस्ता हि भवाजवन्याः शेषोद्भवाः सत्पुरुषा भवन्ति॥ आत्मा दिनकृत् मनस्तुहिनगुः सत्त्वं कुजोज्ञोवजोजीवोज्ञानसुखे सितश्च मदनो दुःखे दिनेशात्मजः। राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः। सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः"॥ समुत्साहः शौर्य्यमिति महोत्पल नेता सेनाध्यक्षः। "बलाबलात् ग्रहाणां स्यादात्मादीनां बलाबलम्। नृपाद्याः प्रबला कुर्युः स एव शनिरन्यथा"॥

सत्याचार्य्यः। "षट् सूर्य्यस्य दशा ज्ञेयाः शशिनो दश पञ्च च। अष्टावङ्गारके प्रोक्ता बुधे सप्तदश स्मृता॥ शनैश्चरे दश प्रोक्ता गुरोरेकोनविंशतिः। राहो द्वादशवर्षाणि भृगोरर्य्येकविंशतिः। दिक्षु त्रयं त्रयं ज्ञेयं विदिक्षु च चतुष्टयम्। कृत्तिकादिप्रदातव्यं दिगम्बरमता दशा॥ कृत्तिकादित्रये सूर्य्यः सोमो रौद्रचतुष्टये। मघादित्रितये भौमो बुधो हस्तचतुष्टये॥ अनुराधा त्रये सौरिर्गुरुः पूर्व्वचतुष्टये। धनिष्ठात्रितये राहुः शेषे शुक्रः प्रकीर्त्तितः॥ सूर्य्योपग्रय-

भौमार्किदशातिकष्टदा नृणाम्। गुरुशचन्द्रशुक्राणां यथेप्सितफलप्रदा"॥ वराहः "स्वाकहीनमाकाब्दात् प्रत्यब्दं पञ्च वासरान्। तिथींश्च चन्द्रमिश्रितो ह्यागुणो च ऋताश्विनो॥ दण्डपलविपलान्यनुपश्वानि च सावने। वर्द्धयित्वा श्रवशेषभोग्यास्तु गणनक्रमात्"॥ अन्तर्दशाज्ञानमाह। "स्वदशाभिर्दशां हत्वा नवभिर्भागमाहरेत्। लब्धा मासास्तु तच्छेष पूरयित्वा तु त्रिंशता॥ यद्वैद्धत्वा दिनं लब्धं तच्छेषे षष्टिपूरिते। नवभिश्च हृते लब्धा ज्ञेया दण्डास्तदन्तरे॥ रवेः षड्वर्षमध्ये तु भेदा ४ मासा रवेर्निजाः। चन्द्रस्य दश मासाश्च दिक्दिन पञ्च मासकाः॥ कुजस्य ग्रस्य रुद्रास्तु मासादिक् दिवसाः शनेः। ऋतुमासाश्चविंशश्च गुरोर्वर्षाश्चविंशतिः॥ राहोर्मासाष्टका ज्ञेया भृगोर्वर्षस्तु मासको। एवं ग्रहाणामन्येषामूह्यायेवान्तरोदयः॥ यद्गृहस्यान्तरे यस्तु यत् संख्यं कालमासवान्। तत् सख्यं स्वान्तरे तस्मै च दद्यादिति निश्चय.॥ स्वान्तरग्रहणे स्वाशं स्वांशेन पूरयेत् सदा"॥ दशाफलन्तु। "उद्वेगचित्तपरिखेदितवित्तनाशक्लेशप्रवासमदपीडितपक्षपातैः। सक्षोभितस्वजनबन्धुवियोगदुःखैर्भानोर्दशा भवति कष्टकरी नराणाम्"॥ र। "सौख्यं विभर्ति वरवाहनयानरत्नकीर्त्तिप्रतापबलवीर्य्यशुभान्वितञ्च। मिष्टान्नपानशयनासनभोजनानि चान्द्री ददाति धनकाञ्चनभूमिशहम्"॥ च। "शस्त्राभिघातवधबन्धनरेन्द्रपीडाचिन्ताज्वर विकलताश्च गृहे करोति। चौराग्निदाहभयभङ्गविपत्तिरोगकीर्त्तिप्रतापधनहा च दशा कुजस्य"॥ म। "दिव्याङ्गनावदनपङ्कजषट्पदत्व लीलाविलासशयनासनभोजनञ्च। नानाप्रकारविभवागमकोषवृद्धिः चिप्र भवेद्बुधदशासु हितार्थसिद्धि."॥ बु। "मिथ्यापवादवधबन्धनकार्य्यहानिमालस्यंयुक्प्रियसुखद्रविणे–

विहीनः। मित्रेषु वैरमभिवाञ्छति वैरयुक्तः कष्टासु पापदशासु शनैश्चरस्य" ॥ श। "रम्य गृहं विनयमव्ययमानवृद्धिं प्राप्नोति सौख्यधनधान्यविभूतियोगम्। धर्मार्थकामसुखभोगबहुप्रयुक्त यावत् वृहस्पतिदशा पुरुषो हि तावत्" ॥ वृ। "बुद्धाविहीनमतिनाशवियोगदुःख नष्टार्थसिद्धिभयभङ्गविपात्तिरोगम्। सन्तापशोकपरदेशगतं करोति राहोर्दशा भवति जीवनसंशयाय"॥ रा। "मन्त्रप्रभावनिपुणः प्रमदाविलासः क्षेत्रातपत्रनृपपूजितदेशलाभः। हस्त्यश्वलाभधनपूर्णमनोरथः स्यात् शौक्रोदशा भवति नियतराजलक्ष्मीः" ॥ शु। रवेः सूक्ष्मदशावर्षाणि ६। तस्यैवान्तर्दशा मासाः ४। तत्फलम्। "उद्विग्नचित्तपरिखेदितवित्तनाशक्लेशप्रवासगदभीतिमहाभिघातान्। दुःखप्रवासवधबन्धमयानि चैव भानोर्दशा प्रकुरुते खलु राजपीडाम्" ॥ रर। सोमस्य मासाः १०। तत्फलम्। "गदसङ्कटसन्त्रासं खेच्छाहानिं धनक्षतिम्। कुरुते रजनीनाथो भानोरन्तर्दशां गतः" ॥ रच। कुजस्य मासाः ५। दिनानि १०। फलम्। "स्वर्णप्रवालसौख्यानि रत्नानि कीर्त्तिमुत्तमाम्। ददाति भूसुतोऽभीष्टं भानोरन्तर्दशाङ्गतः" ॥ रम बुधस्य मासाः ११। दिनानि १०। "दद्रुं विचर्चिकाञ्चैव कच्छुदुष्टादिबाधकान्। चन्द्रजः कुरुते शोकं भानोरन्तर्दशां गतः" ॥ रुब। शनेर्मासाः ६ दिनानि २०। फलम्। "सन्तापं वित्तनाशञ्च बन्धुनाशं पराजयम्। सौरिः करोति वैकल्यं भानोरन्तर्दशाङ्गतः" ॥ रश। गुरोर्वर्षादि १।०।२०। "धर्मार्थकामसौख्यानि ददाति विबुधार्चितः। कुष्ठादिव्याधिहन्ता च भानोरन्तर्दशां गतः" ॥ रवृ। राहोर्मासाः ८। "शुभाशुभवोद्वेगं व्याधिभीतिसुतक्षयान्। कुरुते सिंहिकासुनू रवेरन्तर्दशाङ्गतः" ॥ ररा। शुक्रस्य वर्षं १। मासौ २।

"कोष्ठप्रोवाग्निरोरोगज्वरान् शूलादिदारुणान्। शोकं करोति भृगुजः सूर्य्यस्यान्तर्दशाङ्गतः" ॥ रशु। एवं रवेर्वर्षाणि। ६। चन्द्रस्य स्थूलदशावर्षाणि १५। तस्यैवान्तर्दशावर्षे २। मासः १। फलम्। "कुर्य्याद्विभूतिवरवाहनमातपत्रचेमप्रतापबलवीर्य्यसमन्वितानि। मिष्टान्नपानशयनासनभोजनानि चान्द्रीदशा प्रचुरकाञ्चनभूमिदाश्च" ॥ चच। कुजस्य वर्षं १। मासाः ८। दिनानि १०। फलम्। "पित्तशोणितपीडाञ्च चौराणाञ्च भयं तथा। मङ्गलः कुरुते नित्यं विधोरन्तर्दशाङ्गतः" ॥ चम। बुधस्य वर्षं २। मासाः ४। दिनानि १०। "सर्वत्र द्रव्यलाभञ्च गजाश्वगोधनानि च। चन्द्रजः कुरुते सौख्यं विधोरन्तर्दशां गतः" ॥ चबु। शनेर्वर्षं १। मासाः ४। दिनानि २०। "बन्धुक्लेशं नृपाद्भीतिं व्यसनं शोकमाकुलम्। विनाशं कुरुते शौरिश्चन्द्रस्यान्तर्दशाङ्गतः" ॥ चश। गुरोर्वर्षे २। मासाः ७। दिनानि २०। "दानसौख्यानि सम्भोगवस्त्रालङ्कारभूषणम्। कुरुते विबुधाचार्य्यो विधोरन्तर्दशाङ्गतः" ॥ चवृ। राहोर्वर्षं १। मासाः ८। "वह्निशस्त्रभयं दुःखं शोकं बन्धुधनक्षयम्। कुरुते राहुरत्यर्थं चन्द्रपाकदशाङ्गतः" ॥ चरा। शुक्रस्य वर्षं २। मासाः ११। "सेव्यते वरनारीभिर्नरो लक्ष्मीः प्रवर्त्तते। मुक्ताहारमणिप्राप्तिर्विधोरन्तर्गते सिते" ॥ चशु। रवेर्मासाः १०। 'ऐश्वर्य्यं बहुसौख्यञ्च व्याधिनाशमरिक्षयम्। नृपतेश्च रविः कुर्य्यात् विधोः पाकदशाङ्गतः"। चर। एवं चन्द्रस्य वर्षाणि १५। कुजस्य स्थूलवर्षाणि ८। तस्यान्तर्दशा मासाः ७। दिनानि ३। दण्डाः २०। "क्रूराभिघातवधबन्धभयानि धत्ते चिन्ताज्वरं विकलशून्यमदाश्रमञ्च। चौराग्निभीतिधनहानिनरेन्द्रपीडाः कुर्य्याद्विनाशनिधनञ्च दशा कुजस्य" ॥ मम। बुधस्य वर्षं १। मासाः ३। दिनानि ३। दण्डाः २०। "परमैश्वर्य्य-

मतुलं नानाविधसुखाश्रयम्। करोति सोमपुत्रश्च चितिजान्तर्दशाङ्गतः"॥ मबु। शनेर्मासाः ८। दिनानि २६। दण्डाः ४०। "रिपुचौराग्निभीतिश्च रोगमन्तरमन्तरम्। महानलकृती ह्येषः कुजस्यान्तर्गते शनौ"॥ मश। गुरोर्वर्षं १। मासाः ४। दिनानि २६। दण्डाः ४०। "पुष्पधूपान्नवस्त्राद्यैर्देवब्राह्मणपूजनम्। नृपतुल्यत्वमाप्नोति कुजस्यान्तर्गते गुरौ"। मह। राहोर्मासाः १०। दिनानि २०। "कार्य्यार्थनाशं सर्वत्र बन्धचौरादिसाध्वसम्। कुरुते सिंहिकापुत्रो भौमस्यान्तर्दशां गतः"॥ मरा। शुक्रस्य वर्षं १। मासाः ६। दिनानि २०। "धनद्रविणसुखादींश्च नानावस्त्र वरस्त्रियः। प्राप्नोति विपुलां लक्ष्मीं कुजस्यान्तर्गते भृगौ"॥ मशु। रवेर्मासाः ५। दिनानि १०। "नानारत्नञ्च सौख्यञ्च भूमिलाभमथापि वा। नृपपूजामवाप्नोति कुजस्यान्तर्गते रवौ"॥ मर। सोमस्य वर्षं १। मासाः १। दिनानि १०। "धनलाभं सुखं भोगं शरीरारोग्यमेव च। लोकानन्द्यमवाप्नोति चितिजान्तर्गते विधौ"॥ मच। एवं कुजस्य वर्षाणि ८। अथ बुधस्य स्थूलदशा वर्षाणि १७। तस्यान्तर्दशा वर्षं २। मासाः ८। दिनानि ३। दण्डाः २०। फलम्। "दिव्याङ्गनावदनपङ्कजषट्पदत्व लीलाविलासवरभोगसुखोदयञ्च। नानाप्रकारविभवागमकोपहर्षि चिप्रं सृजेद्बुधदशा विपुलाञ्च सिद्धिम्"॥ बुबु। शनेर्वर्षं १। मासाः ६। दिनानि २६। दण्डाः ४०। "वातश्लेष्मकृता पीडा विरहो बन्धुभिः सह। विदेशगमनञ्चैव बुधस्यान्तर्गते शनौ"॥ बुश। गुरोर्वर्षं २। मासाः ११। दिनानि २६। दण्डाः ४०। "व्याधिशत्रुभयैस्त्यक्तो धनाढ्यो नृपवल्लभः। धर्मेज्यायां सुतवश्च बुधस्यान्तर्गते गुरौ"॥ बुह। राहोर्वर्षं २ मासाः १०। दिनानि २०। "बन्धुनाशं मनस्तापं देशत्यागञ्च बन्धनम्। करोति बहु-

दुःखानि बुधस्यान्तर्गतं तमः" ॥ तमो राहुः। बुरा। शुक्रस्य वर्षाणि ३। मासाः ३। दिनानि २०। "धनाढ्यं बहुपुत्रञ्च धर्मवृद्धिं धनागमम्। कुरुते दानवाचार्य्यो बुधपाकदशाहृत"॥ बुशु। रवेर्मासाः ११। दिनानि १०। "श्रिया परमयायुक्तं गजवाजिधनान्वितम्। प्रभाकरः करोत्याशु बुधपाकदशाहृतः" ॥ बुर। सोमस्य वर्षं २। मासाः ४। दिनानि १०। "कण्टकादिप्रवेशञ्च स्त्रिभ्यो भयमेव च। निशाकरः करोत्याशु बुधपाकदशाहृतः" ॥ बुच। कुजस्य वर्षं १। मासाः ४। दिनानि ३। दण्डाः २०। "कफपित्तसमुद्भूतां शिरःपीडां भयावहाम्। मङ्गलः कुरुते घोरं बुधस्यान्तर्दशाहृतः" ॥ बम। एवं बुधस्य वर्षाणि १७। अथ शनेः स्थूलदशा वर्षाणि १०। तस्यान्तर्दशा मासाः ११। दिनानि ३। दण्डाः २०। "मिथ्याप्रवादवधबन्धनिराश्रयत्वं चौरादिभूपतिभुजङ्गमभीतिसुपाम्। आशानिराममथवार्जनकार्य्यहानिं पङ्गोर्दशा प्रकुरुते नियतं नराणाम्" ॥ शश। गुरोर्वर्षं १। मासाः ८। दिनानि ३। दण्डाः २०। "देवतानुरतं शान्तं नानाप्रीतिं करोति च। तुङ्गसौख्यसमायुक्तं पङ्गोरन्तर्गतो गुरुः" ॥ शबृ। राहोर्वर्षं १। मासः १। दिनानि १०। "नृपाद्भयं ज्वरं घोरं दुःखञ्च प्राणसंशयम्। धननाशञ्च कुरुते शनेरन्तर्गतं तमः' ॥ शरा। शुक्रस्य वर्षं १। मासाः ११। दिनानि १०। "सुहृद्बन्धुधनैः पूर्णो भार्य्या वित्तसमन्वितः। स्वर्णं सुखञ्च लभते सौरस्यान्तर्गते सिते" ॥ शशु। रवेर्मासाः ६। दिनानि २०। "परदाराभिगमनं करोति खरदीधितिः। लोकस्य च सन्देहं शनेरन्तर्दशाहृतः" ॥ शर। सोमस्य वर्षं १। मासाः ४। दिनानि २०। "स्त्रीणां कुचिरोगञ्च कफपित्तगदं शशी। सगुदैयञ्च कुरुते पङ्गोरन्तर्दशाहृतः" ॥ शच। कुजस्य मासाः ८।

दिनानि २६। दण्डाः ४०। फलं "देहचैव्यं महारोगं नानादुःखानि भूमिजः। धननाशञ्च कुरुते शनेरन्तर्दशाङ्गतः"॥ शम। बुधस्य वर्षं १। मासाः ६। दिनानि २६। दण्डाः ४०। "आयुरारोग्यविजयं बहुवित्तानि सोमजः। करोति चादरं लोके शनेरन्तर्दशाङ्गतः"॥ शबु। एवं शनेर्वर्षाणि १०। गुरोः स्थूलदशा वर्षाणि १८। तस्यैवान्तर्दशा वर्षाणि ३। मासाः ४। दिनानि ३। दण्डाः १०। "राज्यासदं तनयवित्तविनाशभोगान् पर्याप्तसौख्यधनधान्यसमाश्रयञ्च। विद्याप्रसादवररत्नसुखार्थभोगसिद्धिं दशा सुरगुरोः कुरुते नियतञ्च"॥ हह। राहोर्वर्षं २। मासः १। दिनानि १०। "बन्धुद्वेषं स्ववादं स्थानभ्रंशं निराश्रयम्। कलहं कारयेद्राहुर्गुरोरन्तर्दशाङ्गतः"॥ हरा। शुक्रस्य वर्षाणि ३। मासाः ८। दिनानि १०। "कलहं बन्धुभिः सार्द्धं वित्तनाशं धनक्षतिम्। स्त्रीवियोगञ्च कुरुते जीवस्यान्तर्गतः सितः"॥ हश। रवेर्वर्षं १। दिनानि २०। "बहुमित्रं बहुधनं सौभाग्यं राजवल्लभम्। कुरुते भास्करः शान्तिं गुरोरन्तर्दशाङ्गतः"॥ हर। सोमस्य वर्षं २। मासाः ७। दिनानि २०। "भोगाढ्यो बहुभार्य्यश्च रिपुरोगविवर्जितः। नृपतुल्यो भवेच्चैव गुरोरन्तर्दशाङ्गतः"॥ हच। कुजस्य वर्षं १। मासाः ४। दिनानि २६। दण्डाः ४०। "तीक्ष्णरोषो रिपोर्हन्ता गजवह्नीमदर्पनः। सुखसौभाग्यसंयुक्तः कुजे चान्तर्गते गुरोः"॥ हम। बुधस्य वर्षं २। मासाः ११। दिनानि २६। दण्डाः ४०। "सुस्थोऽसुस्थः सुखोदुःखो मधुर्हाद्भिः पुनः पुनः। देवार्चनपरो नित्यं जीवस्यान्तर्गते बुधे"॥ हबु। शनेर्वर्षं १। मासाः ८। दिनानि १। दण्डाः २०। "वेश्याजनाश्रयात् सौख्यं भवेद्वित्तविवर्जितः। सुसनीतिमना नित्यं गुरोरन्तर्गते शनौ"॥

हृष। एवं गुरोर्वर्षाणि १९। राहो खूलदशा वर्षाणि १२। तस्यान्तर्दशा वर्षं १। मासाः ४। "भार्यादिदूषणनिदान-विवादबन्धशस्त्राभिघातभयहीनपराक्रमश्च। अप्राप्तसौख्यधन-काञ्चनहीनदेशो राहोर्दशा भवति जीवनसंशयाय"॥ रारा। शुक्रस्य वर्षं २। मासाः ४। फलम्। "शिरोरोगं सुदेहञ्च कुर्याद्भार्याञ्च चञ्चलाम्। बान्धवैः कलहो नित्यं राहोरन्त-र्गते भृगौ"॥ राश। रवेर्मासाः ८। "शिरोरोगभयं घोरं मृत्युशोकञ्च दारुणम्। हृद्दग्निभयं कुर्याद्राहोरन्तर्गतो रविः॥ रार। सोमस्य वर्षं १। मासाः ८। "स्त्रीपुत्रकलहं चैव वित्तनाशं मनःक्षतिम्। करोति क्लेशमत्यन्तं राहोरन्त-र्गतो विधुः"॥ राच। कुजस्य मासाः १०। दिनानि २०। "विषशस्त्राग्निचौरेभ्यो नियतं दारुणं भयम्। पातस्यान्त-र्गतः कुर्यात्तस्य भूमिनन्दनः"॥ राम। बुधस्य वर्षं १। मासाः १०। दिनानि २०। "ज्वरमुदरपिपीडाञ्च बान्धवं स्वजनैः सह। भृत्यापत्येषु विद्वेषं कुर्यात् पातान्तरे बुधः"॥ राबु। शनेर्वर्षं १। मासः १। दिनानि १०। "स्त्रीपुत्रैः कलहो नित्यं बान्धवैः सह वैरिता। भवेत्तु बहुधा दुःखं राहोरन्तर्गते शनौ"॥ राश। गुरोर्वर्षं २। मासः १। दिनानि १०। "व्याधिदुःखभयैस्त्यक्तो देवब्राह्मणपूजकः। कार्य-सिद्धिर्भवेदिष्टा राहोरन्तर्गते गुरौ"॥ राष्ट। एवं राहोर्वर्षाणि १२। शुक्रस्य स्थूलदशा वर्षाणि २१। तस्यान्तर्दशा वर्षाणि ४। मासः १। फलम्। "मन्त्रप्रचाररुचिरप्रमदाविलास-समागदानन्नृपपूजनकीर्त्तिलाभान्। छत्रध्वजयानपरिपूर्णमनो-रथञ्च शौक्री दशा सृजति नियतराजलक्ष्मीम्"॥ शुश। रवेर्वर्षं १। मासौ २। "देहस्त्रीग्रहपाकान्तस्त्रीशतापो-ऽधनान्वितः। त्यक्तः स्यादान्धवैः सर्वैर्भार्गवान्तर्गते रवौ"॥

शुर। सोमस्य वर्षे २। मासाः ११। "समानमाशो रोगश्च कर्म्मनाशश्च नित्यशः। शुक्रस्यान्तर्गते चन्द्रे स्त्रीनाशो नियतं भवेत्"॥ शुच। कुजस्य वर्ष १। मासाः ६। दिनानि २०। "उत्साही धनधान्याढ्यः कस्यच सुमनाः सुखी। भूमिलाभो भवेच्चैव शुक्रस्यान्तर्गते कुजे"॥ शुम। बुधस्य वर्षाणि ३। मासाः ३। दिनानि २०। "सर्वत्र लभते सौख्यं मानसञ्चयभूषणम्। भार्य्या सुशीलतामेति भार्गवान्तर्गते बुधे"॥ शुबु। शनेर्वर्षं १। मासाः ११। दिनानि १०। "धनुचयमवाप्नोति मित्रहृदिच जायते। चौरादित्तस्य लाभः स्याच्छुक्रस्यान्तर्गते शनौ"॥ शुश। गुरोर्वर्षाणि ३। मासाः ८। दिनानि १०। "राजपूजा सुख प्रीतिः कन्याजननमेव च। भार्गवान्तर्गते जीवे चौरावष्टम्भ लभ्यते"॥ शुवृ। राहोर्वर्षं २। मासाः ४। "बन्धनं बन्धुपुत्रादेर्बन्धुनाशो रिपोर्भयम्। शरीरदैन्यमाप्नोति राहावन्तर्गते भृगोः"॥ शुरा। एवं शुक्रस्य वर्षाणि २१। इत्यन्तर्दशाफलम्।

अथ प्रत्यन्तर्दशाफलम्। "ग्रहान्तरं दिनं ज्ञात्वा पश्चिलब्धं ध्रुवं भवेत्। ध्रुवञ्च गणयेद्धीमान् रव्यादिक्रमतो यथा॥ रवौ च वेदा वसवः सुधांशौ कुजे च बाणा नव चन्द्रपुत्रे। शनौ रसादिग् च वृहस्पतौ च राहौ तुरङ्गा भृगुजे च रुद्राः॥ रवेरन्तरमध्ये तु वसवश्च रवेर्निजाः। चन्द्रस्य षोडश प्रोक्ताः कुजस्य च दश स्मृताः॥ बुधस्य वसुचन्द्रौ च द्वादशश्च शनेः क्रमात्। गुरोश्च विंशतिश्चैव राहोश्चतुर्दश स्मृताः॥ एष एव विधिः प्रोक्तो भृगोर्द्वाविंशतिः क्रमात्। एवं दिनानि चान्येषां ज्ञात्वा प्रत्यन्तराणि च॥ यस्मिन् प्रत्यन्तरे यस्तु यत्सङ्ख्यं दिनमानवान्। तद्दिनस्य प्रमाणेन शुभाशुभफलं वदेत्"॥ ध्रुवाणि ध्रुवाङ्काः वेदाङ्कैः पूरयित्वा यत्संख्यं तत्सङ्ख्यदिनं रवेः प्रत्यन्तर्दशायाम् एवमन्येषां ग्रहाणामित्यर्थः।

अथ वर्षपताकी । "रविश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमो भृगुः । ऊर्द्धेशाद्यष्टरेखासु मध्ये केतुरिमेऽष्टपाः ॥ कृत्तिकादिविराड़्वृत्तिर्यया केतौ मघा भवेत् । खनचत्राद्वर्षफलं ज्ञेयं केतोः पताकया ॥ रविणा भ्राम्यते देशान् सन्तापव्याधिपीडितः । कान्तारसङ्कटं शोकं करोति च भयान्वितम्" ॥ र । "चन्द्रे तुष्टिस्तथा पुष्टिः सुखसम्पत्तिरेव च । आरोग्यं लभते नित्यं धनपुत्रसमन्वितम्" । च । "भौमे सदा कार्य्यहानिः क्रूरकर्माणि योजनम् । चर्मरोगो भवेत्तत्र सन्तापश्च दिने दिने" ॥ म । "बुधे बोधश्च कार्य्यश्च कन्यालाभो महासुखम् । राजसम्मानभाङ्नित्यं धनलाभो दिने दिने" ॥ बु । "जीवे विद्या सुखं मानं लोकपूजाधनागमः । सर्वाङ्गाभरणं कण्ठे स्वर्णहारविभूषणम्" ॥ वृ । "शुक्रः पौत्रमवाप्नोति पुष्टिकर्मसुखानि च । मुक्तारत्नप्रवालञ्च राजसम्मानमेव च" ॥ शु । "शनौ रोगभयं शोकं बन्धनं भयमेव च । अर्थहानिं क्षुधाव्यञ्च प्राणनाशं करोति च" ॥ श । "रक्तस्रावी भवेद्राहौ द्वेषो जनस्य च । विदेशगमनञ्चैव वह्निवारिभयं तथा" ॥ रा । "राजकार्य्यभयं चौर्य्यं ग्टहदाहश्च बन्धनम् । केतौ वर्षे भवेद् घातश्चैवामन्तदिनानि तु" ॥ के । अथान्तर्वर्षगणः । "दिनत्रयं त्रिंशदष्टान् स्वदशाभिः प्रपूरयेत् । वर्षेश्वरात् समारभ्य नाक्षत्रिकविधानतः ॥ रवेर्नखा २० चन्द्रमसः खबाणाः ५० कुजेऽष्टयुग्मे २८ विदियट् च पञ्चकं ५६ शनेर्गुणाग्नी ३३ गुरुतोऽग्निकान्तौ ६३ राहोः खवेदा ४० भृगुतः खशैलाः ७०" । राहोरित्येकदेशत्वात् केतुपरमपि तेन राहुकेत्वोर्विंशतिविंशतिः इति वर्षफलम् । "लग्ने द्विपादे पतितत्रिपादे सहरोऽधमः । पादहा स्वावतुष्पादे भवेदेके तु पाप्यता ॥ सर्वोत्तमगते चन्द्रे चतुरादिभिरोक्षिते । विलम्बे

या नृपजया भवति राज्यं नृपयोगे बलयुत दशायाम्॥ कुल-तुल्यः कुलश्रेष्ठो बन्धुमान्यो धनी सुखी। क्रमात् नृपसमो भूयात् पञ्चाद्यैः स्वगृहस्थितैः"॥ नृपादियोगः। "सूर्य्या-द्व्ययगैर्व्योषिद्वितीयगैश्चन्द्रवर्जितैर्वेशिः। उभयस्थितैर्ग्रहेन्द्रै-रुभयचरीयामतः कथिता"॥ व्योशादियोगः। "रविवर्ज्जं द्वादशगैरनफा चन्द्रात् द्वितीयगैः सुनफा। उभयस्थितैर्दुरधुरा-केमद्रुमसंज्ञितोऽन्यः"॥ अनफादियोगः। "मन्दद्दगस्थिर-वचनः परिभूतपरिश्रमो भवेद्व्योषौ। उद्घृष्टवचाः स्मृतिमान् सत्त्वगतिः शालिको भवेद्वेशौ॥ सुभगो बहुभृत्यधनो बन्धूना-माश्रयो नृपतितुल्यः। नित्योत्साही हृष्टो भुनक्ति भोगानुभय-चर्य्याम्"॥ व्योशादिफलम्। "सच्छीलं विषयसुखान्वितं प्रभु ख्यातियुक्तमनफायां सुनफायां धीधनकीर्त्तियुक्तमात्मा-र्जितैश्वर्य्यैश्च बहुभृत्यकुटुम्बारम्भमुद्विग्नचित्तमपि दौरधुरे। भृतकं दुःखिनमधनं जातं केमद्रुमे विद्यात्"॥ अनफादि-फलम्। "एते न च यदा योगाः केन्द्रम् ग्रहवर्जितं शशाङ्कच। केमद्रुमोऽतिकष्टः शशिनि समस्तग्रहादृष्टे लग्नादतीव वसुमान् वसुमान् शशाङ्कात् सौम्यग्रहैरुपचयोपगतैः समस्तैः द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायाम् अन्येषु सत्स्वपि फलेष्विदमुत्-कटेन लग्नचन्द्रोपचयस्थशुभग्रहैर्वित्तमानम्। अधमसमवरि-ष्ठान्यर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानि। अहनि निशि च चन्द्रे स्वेऽधिमित्रांशके वा सुरगुरुसितदृष्टे वित्त-वान् स्यात् सुखी च। सूर्य्यकेन्द्रादिस्थानवशस्थचन्द्रवशेन विनयादीनामधमादिनिर्णयः। प्रायः शुभाः समेता धनभोग-यशोऽन्वितं भूपतितुल्यम्। पापाश्च दुःखतप्तं कुर्वन्त्यधनं सदु-र्भगं दीनम्"॥ ग्रहयोगफलं "बुधगुरुमार्गवदृष्टो विद्वान् दीर्घायुरर्थपरिपूर्णः। सुवपाः सुशरीरधरः सुतधनसौख्यान्वितः

स्यातः । रविशनिनिरीक्षितदृष्टौ जातो मलिनोऽलसश्च रोगार्त्तः । निर्धनो विरूपदेहः प्रेष्यो मूढः खलोऽतिदीनश्च । जीवेक्षितः पण्डितश्चाप्तमूर्त्तिर्वेदार्थशास्त्रागमपारदृष्टिः । दीर्घायुरत्यन्तशुचिः सुशीलो जातः सुपूर्णां भजते विभूतिम् ॥ यं पश्यति भृगुतनयो लग्ने जन्मनि कटाक्षमात्रेण । सौरिः कुलाचलकुलिशः कुत्सितकुलजोऽपि राजा स्यात् ॥ शान्तात्मा चिरजीवी च सुशीलोऽपि बहुप्रजः । शोभनाङ्गो महाप्राज्ञश्चन्द्रदृष्टो भवेन्नरः ॥ दृगादिषड्वर्गसंदृष्टं प्रायेण शुभावहं भवति लग्नम् । एकेनापि शुभेन न च पापैरीक्ष्यते मद्भिः ॥ लग्ने सर्वग्रहदृष्टे नृपतुल्योऽथवा भवेत् । शुभवीक्षे त्विदं वाच्यं पापर्क्षे रिष्टवर्जितम् ॥ लग्ने पापग्रहे रोगी दुर्बलः शत्रुपीडितः । शुभेक्षिते तु तत्रैव भवेत् परवधूरतः" ॥

अथ क्रमेण लग्नदृष्टिफलम् । "क्रोधितो मृदुवाक्यश्च स्तम्भयेप्राश शिल्पवित् । बद्धोनश्च मुरूपश्च दुःखी सूर्यादिवीक्षणात् ॥ सौम्यग्रहस्य वर्गे जातः सुखभाग्विनीतरुचिराङ्गः । धीधर्मख्यातियुतो विद्वान् दीर्घायुरतिसुभगः ॥ जातश्च पापवर्गे दुःखी मलिनोऽलसश्च रोगार्त्तः । प्रेष्यः खलोऽतिदीनो मूर्खस्तेनोऽर्थहीनश्च" ॥ इति षड्वर्गफलम् ।

युद्धजयार्णवे । यस्मिन्नृक्षे स्थितो भानुस्तदादि त्रीणि मस्तके । मुखे त्रीणि तथा द्वे च स्कन्धयोर्भुजयोरुभे ॥ द्वे हस्तयोः पञ्च हृदि नाभावेकं तथा गुह्ये । तथा जानुयुगे द्वे द्वे पादयोर्जन्मधिष्ण्यं न्यसेत् ॥ चरणर्क्षेषु यो जातः सोऽल्पायुर्भवति प्रिये । जानुनोर्भ्रमणायाशी गुह्ये स्यात् पारदारिकः ॥ नाभौ स्वल्पधनो देवि हृदये स्वाम्यसाधनः । पाण्योर्जातो भवेच्चौरो भुजयोर्दुःखभाजनम् ॥ स्कन्धयोर्भोगभोगी च मुखे धर्मरतो धनी । मूर्ध्नि राजा भवेद्देवि बालानां जन्मतो

वदेत्" ॥ स्वरोदये । "मुखे शौर्यं शतं वर्षं नवतिः स्कन्धयो-र्द्वयोः । पञ्चाशीतिर्हृदि प्रोक्ता हस्तयोः सप्ततिः क्रमात् ॥ बाह्वोः षट्पष्टिवर्षाणि गुह्ये षट्षष्टिका क्रमात् । पञ्चाशत् जङ्घयोः पादे निर्धनश्चाल्पजीवनः" ॥ इति जातकचक्रम् ।

"चतुरादिभिरेकस्थैः प्रव्रज्यां स्वां ग्रहः करोति बली । बहुवीर्य्यैस्तत्र बहुः प्रथमा वीर्य्याधिकस्यैव" । ग्रहैः प्रव्रज्या-योगो भवति तेषां मध्ये यो बली स स्वां प्रव्रज्यां करोतीत्यर्थः । प्रव्रज्यायोगः । "तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरका-णाम् । निर्ग्रन्थानाञ्चार्कात् पराजितैः प्रच्युतिर्बलिभिः । रवि-स्तपसी चन्द्रो वृद्धः श्रावकौत्यादि ज्ञेयम् । प्रव्रज्यानिर्णयः लग्ने सूर्येऽक्षिरोगी शशिनि बलयुते रूपवान् वित्तयुक्तो भौमे व्यङ्गः सुवाग्मी शशधरतनये सर्वशास्त्रार्थवेत्ता । जीवे दाता पवित्रः सुकविरथ गते भार्गवे मण्डलेशः सौरो कण्डूति-गात्रस्तमसि च नियतं वञ्चितो धर्महीनः" ॥ १ ॥ "वित्तेऽर्के चैव रोगी सततगदयुतो रात्रिनाथे धनाढ्यो भौमे नित्यं प्रवासी क्षपिसुतधनवान् सोमपुत्रे प्रधानः । जीवे लक्ष्मीप्रमोदी विलसति भृगुजे दर्पितः श्रीनिकेतः । सौरे दीनोऽलिनित्यं तमसि च नियतं चौरिकावित्तजीवी" । २ । "भ्रातर्य्यर्के सधर्मः स भवति नियतं भ्रातृहा रात्रिनाथे । हिंस्रो भौमेऽनुजाना सपदि वधकारी भूमिकाहृत्तिजीवी । सौम्ये सत्यस्य हन्ता भवति सुरगुरौ कामदेवस्वरूपः । शुक्रे राज्याधिकारी रविजटसुजयो-र्भ्रातृहन्ता धनाढ्यः" । ३ । "अर्के बन्धौ सुदुःखी स्वजनपरि-हृतः शीतगो जानुरोगी । भौमे कुग्रामवासी भवति शशिसुते भ्रातृपुत्रान्वितोऽपि । जीवे रत्नोपजीवी विदशरिपुगुरौ सर्व-सौख्याधिकारी । सौरो गेहे निवासी भवति शशिरिपौ मन्द-कर्मा कुचेलः" ॥ ४ ॥ "पुत्रस्थेऽर्के नरोऽसौ प्रथमसुतहतः

सिंहरागी सुपुत्रः। भौमे सर्वाधिकारी भवति धरणिजे पुत्रमो-काकुलोऽसौ। सौम्ये सुखः सुदेहः प्रचुरधनयुतो देवपूज्यः सुपुत्रःकन्यायुक्तो हि शुक्रे रविजदनुजयोः पुत्रपौत्रैर्विहीनः" ।५। "षष्ठेऽर्के मनुजद्वारिपुगणरहितः क्षीणचन्द्रे गतायुः। पूर्णे मनुष्य इन्यात् भवति धरणिजे हीनदेहोऽतिदीनः। सौम्ये शास्त्रार्थ-शुक्लश्चिदशपतिगुरौ राज्यभोग्योपभोगी। दैत्याचार्य्येऽतिरोगी रविजदनुजयोः पापभुङ्नित्यदुःखी" ।६। "सप्तमेऽर्के च जायापतिरतिविमुखो शीतरश्मौ सुपुत्रः। सुखी भूयान्नरोऽसौ भवति धरणिजे हीनमार्य्येव नूनम्। सौम्येऽसुख्यः सुदेहश्चिद-शपतिगुरौ शास्त्रवेत्ता शतायुः। शुक्रे पुत्रप्रमोदी रविजदनुजयो-र्हीनभार्य्येव हीनः" ।७। "मृत्यौ चार्के खमृत्युर्भवति च नियतं शीतरश्मौ गतायुर्भूमिः पुत्रे च रोगी शशधरतनये शून-रोगी विकर्म्मा। जीवे तीर्थेषु मृत्युर्भवति भृगुसुते धार्म्मिका-श्रौर्य्यगोऽसौ, सौरौ शूली गतायुर्भवति विधुरिपौ वेदसुक्तौ गतायुः" ।८। "धर्मे चार्के नरोऽसौ विविधधनयुतः शीतगौ पुण्यकर्मा, लक्ष्मीवान् पुत्रचेता भवति धरणिजे देववित्ताप-हारी। सौम्ये धर्मी सुधीश्चिदशपतिगुरौ राजतुल्यः सुधर्मा, शुक्रे तीर्थानुरागो रविजदनुजयोः पापशीलः सुदुःखी" ।९। "कर्मस्थेऽर्के प्रतापी प्रचुरधनयुतः श्रीपदी क्रोधदृष्टिः, सौमे श्रेयान्वितोऽसौ विविधधनयुतो भूमिजे बन्धुहीनः। नित्यो-त्साही च सौम्ये प्रचुरधनयुतो देवपूज्योऽतिमानी,दिव्यस्त्रीभो-ऽपि शुक्रे नृपतिसमधनः सौरिदैत्ये सुखी च" ।१०। "आये चार्के नरोऽसौ पितृधनसहितः शीतगौ चारुशीलो, भौमे नित्यं च रोगी शशधरतनये सर्वदा क्रोधयुक्तः। जीवे श्रीमान् प्रदाता करितुरगपतिर्भार्गवे शास्त्रवित्तस्त्वौरस्त्वादियुक्तो रवि-दनुजयोः क्रूरकर्मा कुचेलः ।११। "अर्के संस्थे व्ययेऽसौ पुर-

धनरहितः सर्वभोगी सुदुःखी । सोमे खेदान्वितोऽसौ भवति धरणिजे युतरक्तो विबुधिः । सौम्ये धर्मार्थकारी दिनकररहिते देवपूज्योऽतिमानी, शुक्रे शास्त्रानुरागी रविजदनुजयोः क्रूरकर्मा कुचेलः" । १२ । इति लग्नाद्द्विग्रहफलम् । वृहज्जातके । "तीक्ष्णांशुः शशिना समं प्रकुरुते यन्त्राश्मकारं नरं भौमेनाघरतं बुधेन निपुणं सौभाग्य सौख्यान्वितं क्रूरं वाक्पतिनाऽन्यकार्य्यनिरतं शुक्रेण वह्नायुधैर्लब्धस्वं रविजेन धातुकुशलं भाण्डप्रकारेण वा" । १ । "कूटस्त्र्यासवदत्तपण्यमग्रियं मातुः सवक्रः शशीसङ्गः सुनृतवाक्यमर्थनिपुणं सौभाग्यकीर्त्यान्वितम् । विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं साङ्गिराः वस्त्राणां ससितः क्रयादिकुशलं सार्किः पुनर्भूसुतम् । मूलादिस्नेहकूटे व्यवहरति वणिक् बाहुयोद्धा ससौम्ये पूर्यध्यक्षः सजीवे भवति नरपतिः प्राप्तवित्तो द्विजो वा । गोपो मल्लोऽथ दक्षः परयुवतिरतो द्यूतकृत् सासुरेज्ये दुःखार्त्तो सत्यसन्धः सवितृतनये भूमिजे निन्दितश्च । सौम्ये रङ्गचरो वृहस्पतियुते गीतप्रियो नृत्यवित् वाग्मी भूगणपः सितेन शशिना मायापटुर्लङ्घकः । सद्विद्यो धनदारवान् बहुगुणः शुक्रेण युक्ते गुरौ । ज्ञेयःश्मश्रुकरोऽसितेन घटकृज्जातोऽन्नकारोऽपि वा । असितसितसमागमेऽल्पचक्षुर्युवतिसमाश्रय संप्रवृद्धवित्तः । भवति च लिपिचित्रपुस्तकवेत्ता कथितफलैः पुरतोऽपरेऽपि कल्प्याः" । इति द्विग्रहयोगफलम् । "नानागमग्रन्थविशेषबोध व्याख्याननामा नृपपूजितश्च" । "साधुः सधर्म्मा भवति लग्नस्थिते चन्द्रसुते चिरायुः । तुङ्गफलमाह "सुविक्रमः सत्यवचाः सुरूपः प्रियंवदो धर्म्मपरो नरेन्द्रः । सौम्ये तु तुङ्गोपगते विलग्ने विचक्षणः कान्तिधरो गरिष्ठः । रुचिरतर प्रमदाजनरक्तः शुक्रे निर्मलविद्यायुक्तः । लग्नगते

रुचिराङ्गजमूर्त्तिः धर्मरतः पृथुमात्समहृत्तिः । प्रचण्डरूपः पुरुषः प्रतापी प्रजाधिपः स्वल्पवचाः सहिष्णुः वित्तप्रधानः प्रणतप्रियश्च बुधे विनष्टे भवति प्रजातः । शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे । अशून्येषु च केन्द्रेषु कारकर्ष्ये ग्रहेषु च" । सत्याचार्यैः वर्गोत्तमे कुले मुख्यकारकर्षं प्रागुक्तकारकर्षं । "धर्माधिपः पश्यति धर्मभावं लग्नाधिपः पश्यति चेद्विलग्नं मृत्युं यदा पश्यति मृत्युनाथस्तदा तु तीर्थे नियतं मृतिः स्यात् । षष्ठाष्टमकण्टकगोगुरुश्चे मीनसंज्ञलग्ने वा । शेषैर्बलैर्जन्मनि मरणे वा मोक्षगतिमाहुः" । जन्ममरणकालयोर्मोक्षनिर्णयः । "चयो ग्रहा यदैकत्र राशिलग्नविवर्जिताः । भुक्त्वा च विविधान् भोगान् म्रियते जाह्नवीजले । सूर्य्यादिभिर्निधनगैर्हुतवहसलिलायुधज्वरामयजः । क्षुत्तृट्कृतश्च मृत्युः परदेशादौ चरादिभे निधने निधनस्य ग्रहबलेन निर्णयानिर्णयः । यो बलवान्निधनं पश्यति तद्धातुकोपजो मृत्युः । निधनयुगाधिपविंशद्रेक्काणेशश्च मृत्युवीजम्" । ग्रहधातवश्च । "स्नायुस्थ्यसृक्त्वगथ शुक्रवसे च मज्जा मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः" स्नायुवस्थिवन्धनम् । "रविः पित्ती शशी वातकफात्मा पैत्तिकः कुजः । वातपित्तकफो ज्ञश्च कफीज्यो भृगुनन्दनः । कफवातात्मको ज्ञेयः शनिर्वातात्मकस्तथा" । बलवद्ग्रहदर्शनादिभिर्निर्याणज्ञानम् । "पापद्रेक्काणे दाहो ह्यविशे शुभद्रेक्काणे क्लेदः । शेषो मिश्रद्रेक्काणे विष्ठान्त्यो व्याडवर्गेषु" ॥ अग्न्यादिनाशवपविमाणज्ञानम् । "व्याडाः कुम्भालिमध्याद्याः कर्किमीनान्त्यसम्भवौ । सिंहाद्यन्त्यौ मृगाद्यश्च तुला मध्यान्त्यसम्भवो" ॥ व्याडद्रेक्काणाः । "स्त्रीपुंसोर्जन्मफलं तुल्यं किन्त्वत्र चन्द्रलग्नस्थम् । तद्बलयोगाद्वपुराकृतिः सौभाग्यमस्तमये ॥ बाल्ये विधवा भौमे पतिसंत्यक्ता दिवा-

क्रूरेऽस्तगे सौरे पापैर्दृष्टे कन्यैव जरां समुपयाति । क्रूरैरस्ते विधवा पुनर्भूः शुभाशुभैर्नारी ॥ क्रूरेऽष्टमेऽपि विधवा सत्स्वर्थे सा स्वयं म्रियते । ओजे लग्नेन्द्वोः स्त्री दुःशीला शीलसयुता युग्मे ॥ शून्येऽबले कदर्य्यः पतिश्चरे ह्रस्वे प्रवासी स्यात्" ॥ इति स्त्रीणां शुभादि । भविष्ये । "यस्य पाणितले रेखा कनिष्ठामूलसुस्थिता । गतामूल प्रदेशिन्याः स जीवेच्छरदांशतम् ॥ दक्षिणे तु कराङ्गुष्ठे यवो यस्य च विद्यते । सर्वविद्या प्रवक्ता च स भवेन्नात्र संशयः ॥ चिपिटा विरला शुष्का यस्याङ्गुल्यो भवन्ति वै । स भवेद् दुःखितो नित्यं धनहीनश्च वै गुरुः ॥ श्वेतैर्नखैर्विवर्णैश्च पुरुषा दुःखभागिनः । कुशीलाः कुनखा ज्ञेयाः कामभोगविवर्जिताः ॥ नखैस्ताम्रैस्तथैश्वर्यं पुष्पितैः सुभगो भवेत् । चतुरस्रमुखी धूर्त्ता मण्डलास्या शठा भवेत् ॥ अप्रजा वाजिवक्त्रा च महावक्त्रा च दुर्भगा । चपला स्त्री ह्रस्वग्रीवा दीर्घग्रीवा च बन्धकी ॥ कृशग्रीवा स्थिरापत्या स्थूलग्रीवा च दुःखिता । स्पष्टं रेखात्रयं यस्याः ग्रीवायां चतुरङ्गुलम् ॥ मणिकाञ्चनरत्नाढ्यं सा दधाति विभूषणम्" ॥ अन्यत्र तु । "तातस्यैव सुतः प्रोक्तो मेलने मध्यरेखयोः । पृथक्त्वे जारजो ज्ञेयो लक्षणैरिति निश्चितम् ॥ कनिष्ठाङ्गुलिमूले तु रेखयोर्दारनिर्णयः । रेखाभिर्बहुभिः क्लेशं स्वल्पाभिर्धनहीनता ॥ रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां व्रजेत् । तर्जनीमूलगामिन्यां रेखायां छिद्रता यदि ॥ व्याघ्रमूषिकमार्जारसर्पदष्टो भविष्यति" ॥ विष्णुधर्मोत्तरे । "दृष्टिः प्रसन्ना मधुरा च वाणी मत्तेभतुल्या च गतिः प्रशस्ता । एकैककूपप्रभवाश्च रोमाः सन्नतभ्रुतं हास्यमनुत्तमञ्च ॥ श्रान्तस्य यानमशनञ्च बुभुक्षितस्य पानं तृषा परिगतस्य भयेषु रक्षा । एतानि यस्य पुरुषस्य भवन्ति काले तं धन्यमाहुरिह

वै पुरुषं द्विजेन्द्राः॥ पतिप्रिया पतिप्राणा या नारी पतिदेवता। अलक्षणापि सा ज्ञेया सर्वलक्षणसंयुता॥ संक्षेपतस्ते कथितं मयैतद् यल्लक्षणं चारु नितम्बिनीनाम्। प्रायो विरूपासु भवन्ति दोषा यत्राकृतिस्तत्र गुणा वसन्ति"॥ इति देहलक्षणम्।

अथ जातकर्म। मनुः "प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते। मन्त्रवत्प्राशनञ्चास्य हिरण्यमधुसर्पिषाम्"॥ नाभिवर्द्धनात् नाभिसम्बद्धनाडीच्छेदनात्। वर्द्धनं छेदनेऽथ द्वे इत्यमरः। वैजवापः। "जन्मनोऽनन्तरं कार्य्यं जातकर्म यथाविधि। दैवादतीतः कामयेत् अतीते सूतके भवेत्"॥ एवञ्च "मृदु ध्रुवचरक्षिप्रभेष्वेषामुदयेऽपि वा। गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च"॥ इति ज्योतिः शास्त्रोक्तं दैवात्कालोत्कर्षे वेदितव्यं अनुत्कर्षेऽपि नक्षत्रादि नियमो न नैमित्तिकस्य निमित्तानन्तरभावित्वेन निरवकाशत्वात्।

अथ षष्ठीपूजा। विष्णुधर्मोत्तरे। "सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता॥ षष्ठेऽह्नि रात्रियामन्तु जन्मदामाश्च कारयेत्। रक्षणीया सदा षष्ठी निशा तत्र विशेषतः। राम। जागरणं कार्य्यं जन्मदानां तथा बलिः"॥ रामेति सम्बोधनम्। तत्राशौचान्तरदोषोऽपि नास्ति। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुध्यति"॥ इति प्रजापतिवचनात्। पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः न तु मातुः कर्त्तुरिति पुंलिङ्गनिर्देशाच्च। कारयेदिति अन्यगोत्रजाभिप्रायेण। तत्रादौ विनायकादिसहितषोडशमातृकापूजनम्। तथा च कृत्यचिन्तामणौ। "छागजागरणं कार्य्यं खड्गो धार्य्यः समीपतः। आवाह्य पूजयेद्देवीं

गणेशं मातरं गिरिम्" ॥ देवीं षष्ठीं गिरिं मन्थानदण्डम्। मातृनामान्याह वह्निचरणस्थपरिशिष्टम्। "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः॥ शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्योऽन्ते च कुलदेवता"॥ तासामभिधाय भविष्ये "पूज्याश्चैतेऽप्यथा कार्य्या वरदा अयपायय."। मातर इति सर्वासां विशेषणम् अतएव गौर्य्यै मात्रे नम इत्यादिप्रयोगः। एता मातरो लोकमातरो ज्ञेयाः अतएव तयोर्बहुत्वेन निर्देशः। गणेशपूजायां प्रार्थनमन्त्रो यथा। "सर्वविघ्नहरो देव एकदन्तो गजाननः। षष्ठीगृहीतं पौत्रं शिशुं दीर्घायुषं कुरु॥ आयाहि वरदे देवि महाषष्ठीति विश्रुता। शक्तिरूपेण मे पुत्रं रक्ष जागरवासरे"॥ इति षष्ठ्या आवाहनम्। ततः षष्ठीं पूजयेत्। "गौर्य्याः पुत्रो यथा स्कन्दः सदा संरक्षितस्त्वया। तथा ममाप्ययं बालो रक्ष्यतां षष्ठि ते नमः"॥ इति वि.पूजयेदिति भोजराजः। "गणेशश्चैव नन्दा च पूतनामुखमण्डिका। विडालिका शकुनिका शुष्कनन्दा च अम्बिका॥ आचार्य्यका रेवती च विलिपिच्छा ततः परम्। स्कन्दा च द्वादशैतेऽपरा रक्षायै मातृका ग्रहाः"॥ कल्पचिन्तामणौ स्तुतिः। "जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि नमोऽस्तु षष्ठि देवि ते"॥ वरप्रार्थनं "रूपं देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे॥ धात्रि त्वं कार्त्तिकेयस्य महाषष्ठीति विश्रुता। त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः॥ देवतानामशेषाणां सर्वेषां हितकारिणि। समर्पितं रक्ष पुत्रं महाषष्ठि नमोऽस्तु ते"॥ इत्यनेन बालं व्यजनस्य कृत्वा समर्पयेत्। मन्थानदण्डं पूजयेत्।

"मन्थानमन्दरोऽसि त्वं मथितः सागरस्त्वया । तथा ममापि पुत्रस्य मन्यविघ्नं नमोऽस्तु ते" ॥ ततः षट्कृत्तिकाः पूजयेत् । ताश्च । "शिवा सम्भूतिनाम्नी च कीर्त्तिः सन्नतिरेव च । अनसूया क्षमा चैव षड़ेताः कृत्तिकाः स्मृताः" ॥ मार्कण्डेय-पुराणम् । "शस्त्राम्बुपशुशून्ये च निर्यूथे सूतिकागृहे । अदीपशस्त्रमुषले भूतिसर्षपवर्जिते ॥ अनुप्रविश्य या जातमप-हृत्यात्मसम्भवम् । क्षणप्रसविनी बालं तत्रैवोत्सृज्यते द्विज ॥ सा जातहारिणी नाम सुघोरा पिशिताशना । तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे" ॥ यथा अश्वछागस्तथा पशुश्छागः छागजागरणं कार्य्यमित्येकवाक्यत्वात् । पाद्मे "पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति । गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन" ॥

अथ नामकरणम् । श्रुतिः । "एकादशे द्वादशे वाहनि पिता नाम कुर्य्यादिति । एकादशे इति मुख्यः कल्पः असमयस्य चेवायोगादिति न्यायात् अतएव भट्ट-भाष्ये श्रुतिः । "न श्वः श्वमुपासीत को हि समर्थस्य श्वो वेदेति" लिङ्गपुराणे । "श्वः कार्य्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्" ॥ एतच्च परपरप्रशस्ततरतमकालोद्दिष्टकर्मेतरकर्म-परम् । गोभिलः । "जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणमिति" व्युष्टे गते । गर्गः । "आदौ घोष-वदक्षरं यवरलान्मध्ये पुनः स्थापयेदन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात् कृतम् । ऋक्षे तिष्यकराश्विसौम्यवसुभे चित्रा-नुराधोत्तरे पौष्णे चादितिरोहिणीषु शुभकृत् पुंसां समैरक्षरैः"॥ दीपिकाक्षरसात् ख्यातौ शतभिषा ग्वचया अत्र याज्ञा गोभि-लसम्मत पूर्वार्द्धं तेन नारायणजनार्दनादि नाम कुर्य्यात् । यत्त

नामकरणम् । "कुलदेवता नक्षत्राभिसम्बन्धं पिता नाम कुर्य्यादन्यो वा कुलवृद्धः" इति कल्पतरुधृतशङ्खलिखितवचने नाभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमप्येक इति गोभिलसूत्रेणोपनयनकाले च नक्षत्राभिसम्बन्धेन नामाभिधानं तद्गतपदचक्रानुसारात् स्वमतपदानुसारात् ज्ञेयम् । पाश्चात्यानां तथैव व्यवहारः । यत्र तु न तथाकृतं तत्र नामाक्षरानुसारनक्षत्रादपि फलं ज्ञेयम् । अत्र कुलवृद्ध इति दर्शनात् संस्कारान्तरे तथैव व्यवहारः । मनुः । "स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् । माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्" ॥ गोभिलः । अयुग्मान्तं स्त्रीणामिति । यथा यशोदा वसुदादि । नारायणपद्धतौ । "नामकरणं स्थिरलग्ने केन्द्रपञ्चनवमस्थिते सौम्ये । व्यायषष्ठसमधिष्ठितपापे जीवशशाङ्कसौम्यदिनेषु" ॥ प्रसादमासनाम्नाप्येवम् । व्यासः । "न स्नायादुत्सवेऽतीते निर्वर्त्यापि च मङ्गलम् । अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवताः" ॥

अथ निष्क्रामणम् । विष्णुधर्मोत्तरे । "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्" । दीपिकायाम् । "आर्द्राधोमुखवर्जितानुपहते हृद्येऽङ्गिरिक्ते तिथौ वारे भौमशनीतरे घटतुलाकन्यामृगेन्द्रोदये । मदृष्टेऽथ चतुर्थमासि यदि वा मासि तृतीये विधावसौख्ये शुभदे शिशोरभिनवं निष्क्रामणं कारयेत्"। अधोमुखानि भानि च । "आग्नेयवह्नियमपित्र्यविशाखयुक्तं पूर्वात्रयं शतभिषा च मघाप्युडूनि । एतान्यधोमुखगणानि शिवानि नित्यं विवादभूमिखननेषु च भूषितानि"। चतुर्थमासीति कर्म्मेदियसूर्यदिगोः । यथाह विष्णुः । "चतुर्थे मास्यादित्यदर्शनमिति" । भीमकोऽपि । "चतुर्थे मासि पुष्यर्क्षे गृहात् निष्क्रमणं शिशोः" । पारस्करः । "चतुर्थे

मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चतुरितीति"। मासि तृतीय इति तु छन्दोगानां गोभिलेन जननात्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रामणविधानात् यथा गोभिलः। जननाद् यस्तृतीयो ज्योत्स्नस्तस्य तृतीयायामित्यादि। ज्योत्स्नः शुक्लपक्षः। अत्रैव कृत्यचिन्तामणिः। "तस्मात् स्वस्वविधानतोऽर्कशशिनोरर्घ्यं शिशुं दापयेत्"। अर्घ्यमन्त्रः। "एहि सूर्य सहस्रांशो तेजोराशे जगत्पते। अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर"॥ चन्द्रार्घ्यमन्त्रः। "क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम"॥

अथान्नप्राशनम्। "ततोऽन्नप्राशनं षष्ठे मासि कार्यं यथाविधि। अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले"॥ षष्ठ इति मुख्यः कल्पः प्राशुक्तन्यायात्। कृत्यचिन्तामणौ। "अन्नस्य प्राशनं कार्यं मासि षष्ठेऽष्टमे बुधैः। स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः॥ द्वादशी सप्तमी नन्दा रिक्तासु पक्षपर्वसु। बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम्"॥ भुजबलभीमे। "षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे या तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे। प्राजेशादिति पौष्णवैष्णवयुगैर्हस्तादि यद्कौत्तरैराग्नेयाप्यतिसिन्नभेय नितरामन्नादि भक्ष्यं शुभम्"॥ मुवैरिति प्राजेशादौ प्रत्येक सम्बध्यते। तथात्रापि तिथ्यादिविहस्य विवर्जयेत्॥ वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम्। त्रिकोणाष्टकयुकास्यप्रदा यद्दशया फलम्॥ दुष्टे शशधरे लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे"॥ मार्कण्डेयः। "देवता पुरतस्तस्य पितुरङ्कगतस्य च। अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने॥ मध्वाज्यकनकोपेतं प्राशयेत् पायसं ततः। कृतप्राशनमुत्सङ्गे मातु-

धौतन्तु सं न्यसेत्॥ देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः। शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम्॥ प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा। जीविका तस्य बालस्य तेनैव तु भविष्यति"॥

अथ नवान्नम्। दीपिकायाम्। "वयोदर्शो जन्मदिनञ्च मन्दां जन्मर्क्षतारां सितमासरञ्च। त्यक्ता हरीज्येन्दुकरान्त्य-सेव्रयुवेतु च श्राद्धविधानसिद्धम्॥ मेषुया हि चिवान्येषु विभीमयमिवासरे। नवमान्नवत् कुर्यात्सवान्नफलभोजनम्॥ सूर्ये चैव विशाखगे स्मरतियौ पापे त्रिजन्माश्विते मन्दा मन्द-मघौलकाव्यदिवसे पौषे मघौ कार्त्तिके। श्रेमूया हि शिवेषु विष्णुशयने कृष्णे प्रतिपन्नष्टमे श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्। ज्येष्ठाग्रेषार्द्रगे सूर्ये मृगनेत्राभिधानके। नवान्नैर्भोजनं श्राद्धं अन्यचन्द्र तिथौ न च"॥ ब्रह्मपुराणे। "प्राश्नीयाद्द्विजसंयुक्तं नवं विप्राभिमन्त्रितम्"॥

अथ जन्मतिथिः। "जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च। भवन्ति संवत्सरमेव तावत् मैरुत्यसम्मान-सुखानि तस्य। कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत्॥ अनुचयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे। तत्र सर्वविधिप्रार्थं ग्रहविप्रसुरार्चनम्॥ सौरारयोर्दिने सुज्ञा देयास्तूचे॥ काञ्च-नम्। जन्मन्यूचे यदि स्यातां वारौ भौमशनैश्चरौ। माघः सकलसौ नाम ममो तु स्वप्रदायकः"॥

अथ चूडाकरणम्। मनुः। "चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं स्मृति-चोदनात्"॥ नात्र प्रासुतन्यायात् प्रथमाब्दस्य प्राधान्यं किन्तु तृतीयाब्दस्य। तथा च "चूडाकार्य्यं तृतीयाब्दः सर्व-गृह्यादिसम्मतः तत्पादेऽथोचवद्य मुख्य इत्यवगम्यते"॥ यद्व-

लिखितौ। "तृतीयवर्षे चूड़ाकरणं पञ्चमे वा" इति। ज्योतिषे। अयुग्माब्दे चूडाभौमशनैश्वरे। "अर्केन्दुकालमृतौ च जन्मभाद्विन्दुभेतरे। रिक्ता दर्शाष्टमी षष्ठी प्रतिपद्वर्जिते सिते"॥ दक्षोऽपि सामान्यतो दोषमाह। "षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी। अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥ मेषसिंह तुला कर्किंवृषिकेतरलग्नके। श्रवणादित्रयस्वाती चित्रा पुष्याश्विचन्द्रभे। आदित्यरेवतीहस्ताज्येष्ठामूले च चोडकम्। पौष्णाश्विपुष्यवसुवासवासुदेवब्रह्मार्कचन्द्रवरुणाह्वितिथिषितभेषु। वारेषु सोमबुधवाक्पतिभार्गवाणां चौरं करोति कुशलं खलु मानवानाम्" इति वचनात् रोहिण्यामपि चूडाकरणम्। अत्रापि तिथ्यादिविरुद्धत्वं वर्जयेत्। "सूर्य्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ क्षीणे शीतकरौ महीजयमयोर्वारे निशासन्ध्ययोः। भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ चौराद्रोगभयं वदन्ति यवना सत्यं तथान्ये जगुः"॥ राजमार्त्तण्डे। "मानं हरेत् चौरमिहायुषोऽर्कः शनैश्चरः पञ्चकुजस्तथाष्टौ। आचार्य्य भृगिवन्दु बुधाः क्रमेण दद्युर्दशैकादशसप्तपञ्च"॥ जीवादिवारे चौरं प्रशस्तम्। भोजराजः। "उत्तरायणेर्विसन्निधाने च चूडाकरणं जगुः शुभं यवनाः। चैत्रे मासि दिवाकरवारे वर्त्मनि सवितरिदिवाकरवारविनिर्मोके तु"॥ गर्गः। "जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे। न कुर्य्यात् प्रथमं चौरं विशेषाच्चैत्रपौषयोः"॥ ज्येष्ठपुत्रकन्ययोस्तु ज्येष्ठव्यासाद्यभ्यन्तरे चूडानिषेधो विवाहप्रकरणे उक्तः। नित्यचौरे तु राजमार्त्तण्डः। "न स्नानमावगसभोक्तृकभूपितानामभ्यक्तभुक्तरणकालनिरासनानाम्। सन्ध्या निशा-शनिकुजार्कदिनेषु रिक्ते चौरं हितं प्रतिपदह्नि न चापि विद्याम्॥ प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्य्यान्नरः चौरमनुत्कटस्थः।

उत्तराश्रितत्रयाश्विरोहिणीरौद्रसर्पपित्र्येषु चाश्विभे। श्मश्रुकर्मसकलं विवर्जयेत् प्रेतकार्य्यमपि बुद्धिमान्नरः। प्रेतकार्य्यं पतितप्रेतसम्प्रदानकदासी घटदानविषयकम्। अन्यथा वक्ष्यमाणवचनविरोधः स्यात् "चन्द्रशुद्धिर्यदा नास्ति ताराया्श्च विशेषतः। अवौरिभेऽपिकर्त्तव्यं चन्द्रचन्द्रजयोर्दिने॥ मासं चौरे हन्ति गुरुः शत्रं शुक्रो धनं रविः। आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः"॥ श्रीपतिरत्नमालायाम्। "आज्ञया नरपतेर्द्विजन्मनां दारकर्म्मसृतसूतकेषु च। बन्धमोक्षमखदीक्षणेष्वपि चौरमिष्टमखिलेषु चोडुषु॥ देवकार्य्ये पितृश्राद्धे रवेरप्यविक्षये। क्षुरिकर्म्म न कुर्वीत जन्ममासे च जन्मभे"॥ वृद्धगार्ग्यः। "केशवमानसपुरं पाटलिपुत्रं पुरीमहिच्छत्राम्। दितिमदितिञ्च स्मरतां चौरविधौ भवति कल्याणम्"॥ अत्र क्रमो वराहपुराणे। "श्मश्रुकर्म्म कारयित्वा नखच्छेदमनन्तरम्"।

अथ कर्णवेधः। मार्कण्डेयवृद्धगर्गमार्त्तण्डकल्पचिन्तामणिषु। "यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च। पटुकर्णं तं विजानीयात् गर्हितस्य क्षयस्य च॥ इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्यात्र वत्सरे। कर्णवेधो हितस्तस्य नाव्र कार्य्या विचारणा॥ पटुकर्णोत्पत्तिमाशङ्क्य भानोः शुद्धा समेऽपि च। कर्णे वेधो न दोषः स्यात् अन्यथा मरणं भवेत्"॥ राजमार्त्तण्डे "न जन्ममासे न च चैत्रपौषे न युग्मवर्षे न हरौ प्रसुप्ते। रवौ च दुष्टे न च कृष्णपक्षे न जन्मभे कर्णविधिः प्रशस्तः"॥ दीपिकायाम्। "नो जन्मेन्दुममास सूर्य्यरविजक्षाक्षात्रसुमास्युते गम्तेऽर्के लघुयुग्मविष्णुसदृभे स्यात्युत्तरादित्यभे। सौम्येस्त्याय-त्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगैरोजोऽब्दे श्रुतिवेध इज्य-श्रितभे लग्ने तु काले शुभे"॥ अत्रापि तिथ्यन्तादिविद्धमृक्षं वर्जयेत्। गर्गः। "कर्णवेधव्रतं कुर्य्यादुदङ्मार्गस्थिते रवौ। दक्षिणमार्गस्थिते भानौ नैव कुर्य्याद्विचक्षणः"॥

अथ विद्यारम्भः। विष्णुधर्म्मोत्तरे। "संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्॥ रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्॥ पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्। स्वविद्या सूत्रकारांश्च स्वाञ्च विद्यां विशेषतः"॥ नमस्ते बहुरूपाय विष्णवे परमात्मने। स्वाहेत्यनेन हरिं त्रिःपूजयेत्। "भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च" स्वाहेति ब्रह्मपराणोक्तेन च त्रिःपूजयेत्। लिखनविधिमाह नन्दिपुराणम्। 'शुभे नक्षत्रदिवसे शुभे वारे दिनग्रहे। लेखयेत् पूज्यदेवेशान् रुद्रब्रह्मजनार्दनान्॥ पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः। निरोधी ध्यानवाञ्छौच सत्योपन्नावधारणे"॥ मत्स्यपुराणञ्च। "शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान्। अक्षरान् विलिखेद् यस्तु लेखकः स वरः स्मृतः"॥ नाधीयीतेत्यनुवृत्तौ मनुः। "रुधिरे च स्रुते गात्रात् शस्त्रेण च परिक्षते"। रुधिरस्रवं विना शस्त्रेण क्षतमात्रेऽपि। दीपिकायाम्। "लघुचरशिवमूलाधीमुखत्वष्ट्रपौष्णश्रविषु च हरिबोधे शुक्रजीवार्कवारे। उदितवति च जीवे केन्द्रकोणेषु सौम्यैरपठनदिनवर्ज्जं पाठयेत् पञ्चमेऽब्दे"॥ मदनपारिजाते। "विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ। मरणं शनिभौमाभ्यामविद्या बुधसोमयोः"॥ "विद्यारम्भः सुरगुरुसितश्चेष्वभीष्टार्थदायी कर्त्तुर्यायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र। नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे छायासूनावपि च मुनयः कीर्त्तयन्त्येव माद्याः॥ रवेर्गुरोर्भृगोर्लग्ने तत् खेऽर्केऽष्टौन्दुवर्जितः। गुर्वर्केन्दुबुधाद्यौ च विद्यारम्भः प्रशस्यते"॥ बृहस्पतिः। "प्राङ्मुखो गुरवासीनो वरुणाभिमुखं शिशुम्।

अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥ कूर्मपुराणम् । "स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः" । शिवधर्मे । "संस्कृतैः प्राकृतैर्वाक्यैः शिष्यमनुरूपतः । देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः" ॥ आदिः ग्रन्थकरणादिः नन्दिपुराणम् । "प्रशस्तशब्दसंयोगे कुर्य्याद्यतिविरामणम्" । विरामणं तद्दिनपाठसमाप्तिम् । "समाप्तौ वाचकाभीष्टं कुर्य्यादेव विचक्षणः । सुश्रुतं सुव्रतं भूयादस्तु व्याख्या तु नित्यदा ॥ लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जयी । धर्मवान् धनसम्पन्नो गुरुश्चास्तु निरामयः ॥ इति प्रोच्य यथायातं गन्तव्यञ्च विभावितैः । शिष्टैः परस्परं शास्त्रं विमृशनीय विचक्षणैः ॥ कथावस्तुप्रसङ्गेन नानाख्यानसम्भवैः । युक्तिभिश्च परिहाराभ्यां विज्ञेयापि स्वयं ततः ॥ एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः" ॥ विष्णुपुराणम् । "पुत्रैरध्यापिता ये च ते पतन्ति स्वभोजने" । सूत उवाच । "प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते । न तुष्टिमुत्पादयते शरीरे अन्धस्य दारा इव दर्शनीयाः" ॥ लिङ्गपुराणम् । "यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति । तत्प्रसादेन यस्मात् स प्राप्नुते सर्वसम्पदः" ॥ दुर्वासाः । "सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः । चत्वारि तस्य नश्यन्ति आयुर्विद्यायशो बलम्" ॥ अधीतस्यार्थिने दानमावश्यकम् । तथा च स्मृतिः । "योऽधीत्यार्थिभ्यो विद्यां न प्रयच्छेत् स कार्य्यदा स्यात् श्रेयसो दारमात्रतुल्यात्" । इति । तद्दानञ्च । अध्यापनेन व्याख्यया विलिख्यार्पणेन च मध्यस्तोल्यतोऽधीतद्भिर्निर्वेभ्यः क्रियते । तथा च विष्णुपुराणम् । "प्राणिनामुपकाराय यदेवेह परत्र च । कर्म्मणा मनसा वाचा तदेव मतिमान् भजेत्" ॥ बृहन्नारदीये । "पक्षानतिमिरोपेतान्

सन्देहपटलान्वितान्। निरामयान् यः कुरुते शास्त्राञ्जनशलाकया॥ इह कीर्त्तिं राजपूजां लभते सहतिष्ठ सः। पारमार्थिकेऽपि समये भ्रान्तिः संजायते यतः॥ धावाभराणि शस्त्राणि पश्चाद्रूढान्यतः पुरा। उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ"॥ एवञ्च। एकलव्येनानुपदेष्टापि द्रोणाचार्य्यो गुरुः कृतः। अतो ग्रन्थकर्त्तुः सुतरां गुरुत्वम्। यथा महाभारते। "अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम्। तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा॥ इष्वस्त्रे योगमातस्थे परं नियममास्थितः"॥ शङ्खलिखितौ। "न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः"॥ अङ्गानि च "शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषमेव च। निरुक्तञ्चेत्यङ्गानि वेदानां गदितानि षट्"॥ स्मृतिस्तु धर्मसंहितेत्यमरः। शिष्यस्य गुरुषु ऋणित्वमाह लघुहारीतः। "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत्"॥ नन्दिपुराणे। "यस्तु लब्ध्वान्यतः शास्त्रं संस्कारं प्राप्य वै दृढम्। अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत्॥ विस्मरेच्च तथा मोहात् योऽपि शास्त्रमनुत्तमम्। स याति नरकं घोरमक्षयं भीमदर्शनम्"॥ अतएव गृहस्थादीनामपि पुनरध्ययनमाह आपस्तम्बः "यया विद्यया न विरोचेत पुनराचार्य्यमुपेत्य साधयेदिति"॥ विष्णुः। "यस्य विद्यामासाद्य तया जीवेत् न च सा तस्य परलोकफलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति"। देवलः। "इष्टं दत्तमधीतं यत्किञ्चिदात्मानुकीर्त्तनात्। श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते॥ तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्"॥ अनुकीर्त्तनं कथनम्। श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः॥ भग्नतेजः फलजनकशक्तिहीनं वृथा रथादि

प्रयोजनं विना। वैष्णवामृते भविष्यपुराणम्। "उपाध्यायस्य यो वृत्तिं दत्त्वाध्यापयति द्विजान्। किन्न दत्तं भवेत्तेन धर्मकामार्थमिच्छता" ॥

अथोपनयनम्। उपनयनकालश्च। "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं राज्ञामेकादशे सैके विशामेके यथा कुलम्। ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे" ॥ सैके द्वादशे। तत्रागतौ प्रायश्चित्तं कृत्वा तदुत्तरे कार्य्यम्। "यद्योक्तकर्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगं बालस्योपनयं विदुः ॥ रक्तक्षादि तथा शक्रमते पाठनिषेधनात्। उपनयनं तत्र स्यादिति मन्वादिसम्मतम्" ॥ कृत्यचिन्तामणौ। "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा। व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम् ॥ अस्तं गते दैत्यगुरौ गुरौ वा चन्द्रेऽपि वा पापयुतेऽप्यनुक्ते। व्रतोपनीतो दिवसे प्रयाणं प्रयाति दैवैरपि रक्षितो यः" ॥ उदये लग्ने व्रतेन उपनयनेन। भुजबलभीमकृत्यचिन्तामण्योः "स्वातीमृगधनाश्विमित्रकरभे पौष्णेज्यचित्राहरिश्चिन्दौ तोयपतौ भगे दितिसुते भाद्रद्वये सागरे। केन्द्रस्थे भृगुजेऽङ्गिरःप्रभिसुते चन्द्रे च तारे शुभे कर्त्तव्यं व्रतकर्ममङ्गमतिथौ वाराः सितार्केज्यज्ञाः" ॥ तोयपतिः शतभिषा अदितिसुत उत्तरफल्गुनी सागर पूर्वाषाढा दीपिकायाम्। "जीवार्केन्दुबुधभौ हरित्रयन वसिर्भास्करे चोत्तरस्थे स्वाध्याये वेदपाधिप इष्ट प्रभृदे चौदिभे मादितौ च। शुक्रार्कज्यचन्द्रग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं नो जीवास्तातिचारेऽर्कमितगुरुदिने कालगुडौ व्रतं स्यात्" ॥ रविमदनतिथिं सप्तमीं त्रयोदशीम्। कृत्यचिन्तामणौ। "माघे द्रविणसीमाढ्यः फाल्गुने च दृढव्रतः। चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥ ज्यैष्ठे

गच्छन्नीतिच आषाढे ऋतुभाजनः। शेषेष्वन्येषु राविः स्यान्निषिद्धं निशि च व्रतम्" ॥ राजमार्त्तण्डे। "पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति"। छन्दोगाः। "स्मृतिपूक्ता-ननध्यायान् सप्तमीं च त्रयोदशीं पक्षयोर्माघमासस्य द्वितीयाम्" ॥ परिवर्जयेत् चैत्रशुक्लतृतीया आषाढशुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्लतृतीया युगादित्वेन निषिद्धेति। षष्ठ्यामप्यचिरभार्यो रिक्तासु बहुदोषभाक्। शुक्लपक्ष एव विहितः प्रागुक्ताखलायनवचनात्। सामगानां कुजवारेऽप्युपनयन जोपत्तिरसमाखलाद्यविस्थायणिष्ट्वत वाक्य-वचनात् यथा। "शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिं वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगावुपनयनः स्मृतिकर्महीनः" ॥ अस्य शाखाधिपस्य दीपिकायाम्। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेद-राट्"। वेदाधिपकथनम्। "ब्राह्मणे गुरुशुक्रौ च क्षत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे मतं" ॥ वर्णाधिपकथनम्। परालयलक्षणं वक्ष्ये यात्रायाम्। अत्रापि विवाहवद्ग्रयोगभङ्गवर्जनम्। विष्णुधर्मोत्तरे। "षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः स चतुर्थी च वैश्यस्य परिकीर्त्तिता। सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निव-र्त्तेत" ॥ अत्र षोडशवर्षस्य उपनयनाङ्गता प्रतीयते। "पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्य वैश्ययोः ॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः"। इति यमवचने तदनङ्गता प्रतीयते अनयोर्गर्भजन्मप्रभृतिगण-नाभ्यामविरुद्धार्थता तथा च माण्डव्यः। व्रतबन्धविवाहे च वत्सरपरिकल्पनमाहुराचार्याः। आधानपूर्वकमेके प्रसूति-

पूर्वं सदान्धे तु। यत्तु द्विजानुपक्रम्य पैठीनसिवचनं द्वादश-षोडश विंशतिर्वेदतीता-भवन्त्यकाला भवन्ति इति द्वादश-वर्षाद्युपरि ब्राह्मणादीनां महाव्याहृति होमप्रायश्चित्तार्थम्। षोड़शोपरि तु व्रात्यहोमादि गुरुप्रायश्चित्तार्थमिति इत्युप-नयनम्।

अथ समावर्त्तनम्। "भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते। ताराचन्द्र विशुद्धौ च समावर्त्तनमिष्यते" इति समा-वर्त्तनम् अथाग्निग्रहणम्। "वर्ज्जयन् कुजगुरुज्ञदिनेशवारे माघादि षट्सु च मृदुध्रुवक्षिप्रेषु। कुम्भालमीनमकविलग्न-मशुद्धकालं लग्नस्थशीतगुसितौ च विहाय कुर्य्यात्"॥ अग्नि-ग्रहणशुद्धिः। अथ सन्न्यासग्रहणम्। जीवार्केन्दुशुद्धौ ध्रुव-मृदुभगणे चोत्तरस्थे दिनेशे प्रव्रज्येशे सुवीर्य्ये स्थिरभवन-विलग्नस्थितेर्ज्ञस्यवारे। प्रव्रज्याख्येषु योगेष्वशुभगगनगैर्वीर्य्यहीनैः सवीर्य्ये जीवे धर्म्मेश्वरे वा स्थिरभवननवांशो-दये मोक्षदीक्षा"। इति सन्न्यासग्रहणम्। "शुभपक्षार्कवारेषु मृदुक्षिप्रध्रुवेषु च। शुभराशिविलग्नेषु शुभं शान्तिकपौष्टिकम्"॥ शान्तिकादिशुद्धिः। अथ पद्यं रत्नमालायाम्। "शीतांशौ बुधराशिस्थे शुभेषूदयवर्त्तिषु। स्नानस्य ग्रहणं कार्य्यं हित्वा पापग्रहोदयम्"॥ राजमार्त्तण्डे। "वसु-पुनर्वसुपूर्वभुजङ्गमैः करमित्राकरग्रहदैवतैः सह वाक्पतिभिः सह चित्रायां गुणगणार्जनमेभिरभीप्सितम्"। गुणार्जन-विधिः।

"ग्रामाधरं वर्गैर्मित्रं नाणघ्नं फलहारितम्। शेषाङ्को ग्रामराशिः स्यात् शुभाशुभकरं नृणाम्॥ दीर्घप्रस्तारहस्ताङ्कं त्रिगुणं वसुभिर्हरेत्। तच्छेषाङ्केन बोद्धव्या वास्तुजातिविचक्षणैः॥ एकाङ्के वर्त्तमाने तु विप्रजातिर्लभेत् ध्रुवम्। ब्राह्मणः

क्षत्रियो वैश्यः शूद्रश्च गोचर्मकः ॥ अवमो वर्त्तको हाडौ भवन्त्येते यथाक्रमम्। धननाशकरो विप्रः क्षत्रियो सुखदायकः ॥ धनदश्च भवेद्वैश्यः शूद्रः पीडाकरः स्मृतः। गोपः सम्मानदाता च अवमो धनदायकः। नित्यानन्दकरो नर्त्तो हाडौ च सर्वलक्षणः" ॥

अथ शल्याहि। "सुनिश्चितां मन्दिरभूमिमादौ निखाय तोयावधि शल्यस्ताम्। कुर्य्यादिशल्यामथवा नृमात्रं खात्वाथवा प्रश्नवशाद्विविञ्चः ॥ दूर्वां प्रवालाक्षतपुष्पाद्भिः 'शुचिः शुचि दैवविदं समेत्य। पृच्छेद्विनीतो मधुरस्वरेण शल्यस्य तत्त्वं भवने तदीयः ॥ ततः प्रश्नादिमो वर्णः शल्यार्थी यत्नतोऽथवा। क्रमात् पुष्पफलादेव फलानां ब्राह्मणादितः ॥ प्रथमो धरणीधारिणी करौ च तदनन्तरम्। न भूत्यै मम इत्येष मन्त्रो वह्निप्रियात्मकः" ॥ वह्निप्रिया स्वाहा। "मन्त्रेणानेन काठिनीमभिमन्त्र्य विभाजयेत्। अथवा सदनक्षेत्रं तथा पद्माङ्किलेखयेत् ॥ बकचतएहाः शपया नव चेत् प्रश्नाक्षराणि जायन्ते। प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति ॥ प्रश्ने बकारः प्रतो नराश्चि ब्रवीति शल्यं नरकप्रदायि। श्रीगौभदण्डोरगहेतुमृत्युमद बकारः स्वरशल्यमस्मौ ॥ याम्यां चकारः श्वगास्थिभिस्वप्रभोर्विनाशं प्रकरोति शल्यम्। रक्षोदिशि स्वास्थिगृहस्थितानां सप्तत्रय वक्ति सुनिश्चित तः। एः पार्थिदिशस्थिशिशोर्ब्रवीति मृत्युं प्रवासादुदमेव शल्यम् ॥ कीलावुकोणे नरकपर्मास्थिदापिद्रामिवत्सयत्नद्विधत्ते। धनपदिशि शकारः प्राह विप्रास्थिवित्तक्षयकृदथ पकारो वक्ति कृष्णास्थिरभो ॥ तदिह कुलविनाशं गोधनानाश्च हानिं वितरति गृहनाथस्यापि गुप्तस्य दैवैः। यो मध्यमांशे मक्षित कपालं कालायसं वाह छिन्नचयाय ॥ यवादपास्यान्यधुना प्रसाद्य सर्वत्र तथ्यं कथयामि

शल्ये । इन्द्रयचो जलेशाने शल्य सार्द्धकरे कटौ । वज्रगन्ध-कुबेरेषु पुरुषे मध्यवातयोः" ॥ इति शल्योद्धारः ।

देवीपुराणम् । "पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत् । प्रासादे दोषदं शल्य भवेत् यावज्जलान्तकम् ॥ गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते । शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा" ॥ वाटीव्यवस्था हस्तोऽप्यत्र कफोण्युपक्रममध्यमाङ्गुल्यपर्यन्तः । मध्यमाङ्गुलीकूर्परयोर्मध्ये प्रामाणिकः कर इत्यभियुक्तव्यवहारादिति कल्पतरुरत्नाकरौ । भीमपराक्रमे भोजराजः "स्वामिहस्तप्रमाणेन धर्मपत्नीकरेण वा । मापयेद्धर्मभावज्ञः गृहकर्मणि कोविदः ॥ रूपाष्टके ८१ विनिहती भवनस्य मध्यः कर्त्तुः स्वहस्तमिह युग्मशरैकनिघ्नं १५२ । एकोनितं रसनिशाकरयुग्मभक्तशेषं ततो भवति पिण्डपदं गृहस्य । गृहभूमिसमाहृतपिण्डपदं वसुलोचनरत्नगजैर्गुणितम् । रविभूधरविंशत्योगहृतं भवनायव्ययस्थिति ऋक्षपदम्" ॥ रूपाष्टकेनाष्टोत्या विनिहतः पूरितः । भवनस्य मध्यो दीर्घप्रस्तारमिलितहस्तः स्वहस्तं तत्संख्यान युग्मशरैकनिघ्नं द्विपञ्चाशदुत्तरशतपूरितम् एकोनितं पूर्वाङ्केन मिलितं रसनिशाकरयुग्म २१६ । भक्तशेषं षोडशाधिकद्विशतहृतावशिष्टं संख्यान पिण्डपदसंज्ञं गृहस्य भवति तद्गृहभूमिसमाहृतपिण्डपदं वसुलोचनरत्नगजैः षड्द्विनवाष्टभिर्यथाक्रमं गुणितं पूरितं यथाक्रमं रविभूधरविंशद्योगहृतं द्वादशसप्तत्रिंशत्सप्तविंशतिभिर्हृतं गृहस्य यथाक्रमम् आयव्ययस्थिति ऋक्षपदं भवतीत्यर्थः । "गृहहस्तमिते वर्गे भरण्या योगतो यथा । आयादयो भवन्त्येव वसुपट्टितियियुक्तिता." ॥ ८ । ६ । १५ । २ । अत्र यद्यद्यत् दीयते पश्चात्तदेवाप्नोतीति । यत्र तु शेषो नास्ति तत्र हारकाङ्कः शेषः "शेषाङ्केन फले योध्ये

ग्रेषाभावे तु द्वारकात् । भद्रादेव फलं बोध्यमिति तत्त्वविदां मतम्" ॥ इत्युक्तत्वात् । "व्ययाधिकं न कर्त्तव्यं व्ययमायाधिकं शुभम् । अष्टाविंशप्रेतभागा नरभागाश्च विंशतिः । भागा द्वादश गन्धर्वाश्चत्वारो देवतांशकाः । प्रेतभागं परित्यज्य नरभागे गृहं शुभम्"॥ सारसंग्रहे । "न कोणेषु गृहं कुर्य्यात् नाप्यन्तेनापि मध्यतः । कोणे च धनहानिः स्यादन्ते रिपुभयं भवेत् ॥ मध्ये च सर्व्वनाशः स्यात्तस्मादेतान्विवर्जयेत् । पूर्व्वप्लवी वृद्धिकरो धनदश्चोत्तरप्लवः ॥ दक्षिणप्लवतो मृत्युः धनहा पश्चिमप्लवः" ॥ वास्तुनः प्रागादिनीचत्वफलम् । "प्रागादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयञ्च । स्त्रीकलहः स्त्रीदोष्यं नैस्वं वित्तात्मजविवृद्धी च ॥ भवनस्य वटः पूर्व्वे जातः स्यात् सर्व्वकामिकः । उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥ प्लक्षश्चोत्तरतो धन्यो विपरीतो विपर्य्यये । जम्बीरपूगपनसाम्रककेतकीभिर्जातीसरोजशतपत्रमल्लिकाभिः ॥ यन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदाश्रमपदं श्रियमातनोति । शोभना दाडिमाशोकपुन्नागविल्वकेशराः ॥ रक्तपुष्पाश्च प्रायः चौरिणो च पयोमयम् । कण्टकक्षीरिमयं कुर्य्यात् गृहभेदञ्च शास्मलिः ॥ कृत्तिकाद्यास्तु पूर्व्वादौ सप्तसप्तोदिताः क्रमात् । यद्दिश्यं यस्य नक्षत्रं तत्र तस्य शुभं गृहम्" ॥ स्वनक्षत्रेण गृहदिङ्निर्णयः । "वास्तु प्रमाणेन तु गात्रकेण वामेन शेते खलु नित्यकालम् । त्रिभिस्तु मासैः परिवृत्य भूमौ तं वास्तुनागं प्रवदन्ति सिद्धाः ॥ भद्रादिकेऽ वासवदिक्‌शिराः स्यात् मार्गादिकेषु त्रिषु याम्यमूर्द्धा । प्रत्यक्‌शिराः स्यात् खलु फाल्गुनादौ ज्यैष्ठादिकौवेरशिरा सनागः । मूर्द्धि खाते भवेन्मृत्युः पृष्ठे स्यात् पुत्रभार्य्ययोः । जघनेऽर्थभयं विद्यात् सर्व्वसम्पत्तथोदरे । एकं नागोडुसंज्ञयो दे चेद्दक्षिणपश्चिमे

निर्ऋयालं पूर्वतो होनं कार्य्यं वा सौम्यवर्जितम् ॥ केचिद्दक्षिणभागे तु वदन्त्येकं गृहं बुधाः। ऐशान्यां देवशाला स्यात् आग्नेय्याञ्च महानसम् ॥ आयुष्करन्तु नैर्ऋत्यां वायव्यां कोपमन्दिरम्" ॥ मत्स्यपुराणे। "चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः। वैशाखे धनरत्नानि ज्यैष्ठे मृत्युस्तथैव च ॥ आषाढ़े धनरत्नानि पशुवर्जमवाप्नुयात्। श्रावणे काञ्चनं पुत्रान् हानिं भाद्रपदे तथा ॥ पत्नीनाश इषे मासि कार्त्तिके धनधान्यभाक्। मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥ माघे चाग्निभयं विद्यात् फाल्गुने काञ्चनं सुतान्। शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम्" ॥ विशेषयति भोजः। "कर्किकुम्भहरिनक्रगतेऽर्के पूर्वपश्चिममुखानि गृहाणि। तौलिमेषवृषवृश्चिकजातदक्षिणोत्तरमुखानि कुर्य्यात् ॥ अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधनहानिमश्नुते। मीनचापमिथुनाङ्गनागते कारयेन्न गृहमेव भास्करे ॥ न प्रधानगृहारम्भं कुर्य्यात् पौषे कथञ्चन। यदि कुर्य्यात् सोऽचिरेण महतीमापदं व्रजेत्" ॥ महाभारते। "निषिद्धेऽपि हि काले तु स्वानुकूले शुभे दिने। तृणवस्त्रगृहारम्भे मासदोषो न विद्यते ॥ छेदनं संग्रहञ्चैव काष्ठादीनां न कारयेत्। श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥ अग्निपीड़ा भयं शोको राजपीड़ा धनक्षयः। संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥ क्षीरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत्। कृताधिवासं विहगैरनिलानलपीड़ितम् ॥ गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीड़ितम्। चैत्यदेवालयोत्पन्नं वनभग्नं श्मशानजम् ॥ देवाद्यधिष्ठितं दारु शोषनिम्बबिभीतकान्। कण्टकिनोऽसारतरून् वर्जयेत् गृहकर्म्मणि ॥ पटाशत्थौ च निर्गुण्डौ कोविदारविभीतकौ। पनस सारसोऽपि च पलाशञ्च विवर्जयेत् ॥ विस्तारात् द्विगुणोच्छ्रायं द्वारं कुर्य्या-

त्तथा गटहम्" ॥ गटहारम्भस्तु श्रवणादावप्याह राजमार्त्तण्डः । "आदित्येन्यभरोहिणी-मृगशिरश्चित्राधनिष्ठोत्तरापौष्णोविष्णु-मतानुराधपवनैः शुभैः सुतारान्वितैः । सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुभम्" । मात्स्ये । "चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् । स्तम्भोच्छ्रायादिकर्त्तव्यमन्यत्र परिवर्जयेत् ॥ अश्विनीरोहिणीमूलमुत्तरत्रयमैन्दवम् । स्वातीहस्तानुराधा च गटहारम्भे प्रशस्यते ॥ वज्रव्याघातशूले च व्यतीपातेऽतिगण्डके । विष्कुम्भगण्डपरिघवर्जं योगेषु कारयेत् ॥ आदित्यभौमवर्ज्यास्तु सर्वे वाराः शुभावहाः । प्रसादेऽप्येवमेव स्यात् कूपवापीषु चैव हि" ॥ कल्पतरौ देवीपुराणम् । "यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे । गत्वा पूर्णिमान्यासे शुभदस्तस्य पूजितः" ॥ यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गर्त्तापूरणिमान्यासे स कालः पूजित इत्यर्थः । मात्स्ये । "चैत्रेऽथ फाल्गुने वापि ज्येष्ठे वा माधवेऽपि वा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्" ॥ प्रतिष्ठासमुच्चये ज्येष्ठाषाढकयोर्वापि इत्युक्तेराषाढे दक्षिणायनेऽपि दुर्गाप्रतिष्ठामाह देवीपुराणम् । "महिषासुरहन्त्राय प्रतिष्ठा दक्षिणायने" । यत्तु तत्त्वचिन्तामणौ । "गटहेषु यो विधिः प्रोक्तो विनिवेशप्रवेशयोः । स एव विदुषा कार्य्यो देवतायतनेष्वपि" ॥ एतत्तु मासव्यतिरिक्तशुभचन्द्रादिविषयम् अन्यथा प्रागुक्तविरोधापत्तेः । ज्योतिषे । "ध्रुवं विशाखामदितिञ्च शक्रं भुजङ्गमाग्निञ्च विहाय गेहम् । याम्यं त्वलग्नस्थिरमन्दिरेषु कुर्य्याच्छुभैर्युक्तनिरीक्षितेषु ॥ नवग्रहा भवेयुश्च यदि केन्द्रत्रिकोणगाः । दोषस्तदा क्षयं याति तमः सूर्य्योदये यथा" ॥ राजमार्त्तण्डे । "पूर्णिमातोऽष्टमीं यावत् पूर्वास्यं

वर्जयेद् गृहम्। उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम्॥ अमावास्याष्टमीमध्ये पश्चिमास्यं विवर्जयेत्। नवमीतश्च याम्यास्यं यावच्छुक्लचतुर्दशीम्" ॥ दीपिकायाम्। "गणेशं गन्धपुष्पाद्यैर्लोकपालानथ ग्रहान्। पूजयेत् क्षेत्रपालांश्च क्रूरभूतांश्च शास्त्रतः। ब्रह्माणं वास्तुपुरुषं तद्देहस्थाश्च देवताः" ॥ ताश्च शिखिप्रभृतयो यथा। "शिखि चैवाथ पर्जन्यो जयन्तः कुलिशायुधः। सूर्य्यः सत्यो भृगुश्चैव आकाशो वायुरेव च॥ पूषा च वितथश्चैव गृहक्षतयमावुभौ। गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा॥ दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः। असुरः शेषपापौ च रोगो हि मुख्य एव च॥ भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा। आपश्चैवाथ सावित्री जयो रुद्रस्तथैव च॥ अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः। मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्॥ आपवत्सस्तथा ब्रह्मा वास्तुदेहगतास्त्विमे। चरकी च विदारी च पूतना पापराक्षसी॥ स्कन्दार्य्यमा जम्भकाश्च पिलिपिच्छस्तथाष्टमः। एतान् मत्स्यपुराणोक्तान् गृहारम्भे प्रपूजयेत्" ॥ महाकपिलपञ्चरात्रे "जलाधारगृहारामे यजेद्वास्तु विशेषतः। ब्रह्माद्यदितिपर्य्यन्ताः पञ्चाशत्त्रयसंयुताः॥ सर्व्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः। असंपूज्य हितान् सर्व्वान् प्रासादादीन् न कारयेत्॥ अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्म्मधर्म्मिणोः" ॥ तत्तद्देवताभेदेन बलिमन्त्रोभयविशेषानुक्ता। "स्वर्गपातालमर्त्त्येषु ये देवा वास्तुसम्भवाः। गृह्णन्त्विमं बलिं तूर्यं तुष्टायान्तु समाश्रयम्॥ मातरो भूतवेतालो ये चान्ये बलिकाङ्क्षिणः। विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम्॥ पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा यथाक्रमतः। अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत्॥ आकुञ्चितकरं

वास्तुमुत्तानमसुराकृतिम् । अर्चेत् पूजासु कुड्यादिनिवेशे त्वधराननम्" ॥ देवीपुराणे । "मध्यभागे ततः कुर्य्यात् वास्तुदेवस्य पूजनम् । श्रियश्च पूजनं कुर्य्याद्वासुदेवगणस्य च । गन्धार्घ्यपुष्पनैवेद्यधूपाद्यैः सुरसत्तम । ततः सम्पूजयेत्तस्मिन् सर्व्वलोकधरां महीम् ॥ सुरूपां प्रमदारूपां दिव्याभरणभूषिताम् । ध्यात्वा तामर्च्चयेद्देवीं परितुष्टां स्मिताननाम् ॥ ततः प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत्" ॥ तथा । "एवं प्रपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम् । अपूजिता विनिघ्नन्ति गृहारम्भेषु कारकम् ॥ गृहादेः शिल्परूपत्वात् विश्वकर्म्मापि पूज्यते । शिल्पाचार्य्याय देवाय नमस्ते विश्वकर्म्मणे । स्वाहा ब्रह्मपुराणीयमन्त्रेणेति मतं मम" ॥ ज्योतिषे । "तत्तस्मायतमावगर्त्तमतुलं कर्त्तुं विशुद्धे दिने स्नात्वा ब्राह्मणगोमयैः शुचितरं कृत्वाम्बुपूर्णं सुरान् । संपूज्यामलपुष्पकैर्जलघटं कृत्वाम्बशाखायुत दद्यादर्घ्यमनेन विप्रवचसा मन्त्रेण वास्तोष्पतेः ॥ वास्तोष्पते त्वमुत्तिष्ठ संसारस्थितिकारक । गृहाणार्घ्यं मया दत्तं गृहारम्भं करोम्यहम् ॥ मम सर्व्वहितार्थाय विष्णुलोकाय वै नमः । गर्त्ते तस्मिन् सलिलभरिते निश्चलं वारिभर्त्तुः स्थैर्य्यं प्रकुर्य्यात्कलयति हितं दक्षिणावर्त्तयोगात् । वामावर्त्तं भवति विपदे स्वामिनाशञ्च कुर्य्यात् भूमिच्छेदात् व्रजति मधुतां वित्तनाशं लभेद्वा" ॥ देवीपुराणे । "ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः । चतुरङ्गुलमात्रं तदधः खन्यात् सुसमितम् । आचार्य्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतुर्मुखम् । अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित् । तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेदीमितिस्मरन् । तदागर्त्तं परीक्षेत दधिभक्तान्वितं क्षिपेत् । ईशाने सूत्रपातः स्यादाग्नेय्यां स्तम्भरोपणम् । द्वारं नवमभागे तु कार्य्यं वामात् प्रदक्षिणम्" ।

द्वारस्य विशेषमाह "तृतीयतुर्य्ययोः प्राच्यां याम्ये तुर्य्ये च पश्चिमे। तुर्य्यपञ्चमयोः पञ्च त्रिचतुर्थेषु चोत्तरे"। वामात् प्रदक्षिणमिति गृहाभ्यन्तरे स्थित्वा ऐशान्यादिक्रमेण कार्य्य-मित्यर्थः। तत्र प्रयोगः। कृतस्नानादिः शुभे लग्ने वास्तु-दक्षिणभागे चतुरङ्गुलखातहस्तमात्रगर्त्ते बहुतरनूतनलक्षगो-मयोपलिप्तजलपूरिते शालग्रामे वा गणेशादीन् प्रणवादि नमो-ऽन्तेन स्वं स्वं नाम्ना पूजयेत्। गणेशाय इन्द्राय वह्नये यमाय नैरृताय वरुणाय कुवेराय ईशानाय ब्रह्मणे अनन्ताय सूर्य्याय सोमाय मङ्गलाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यः क्षेत्रपालेभ्यः क्रूरभूतेभ्यः ब्रह्मणे वास्तुपुरुषाय शिखिने पर्जन्याय जयन्ताय इन्द्राय सूर्य्याय सत्याय भृशाय आकाशाय वायवे विष्णवे पूष्णे वितथाय गृहक्षताय यमाय गन्धर्व्वाय भृङ्गराजाय मृगाय पितृभ्य दौवारिकाय सुग्रीवाय पुष्पदन्ताय वरुणाय असुराय शेषाय पापाय रोगाय अहये मुख्याय भल्ला-टाय सोमाय सर्पाय अदित्यै दित्यै आपाय सावित्रे जयाय रुद्राय अर्य्यम्णे सवित्रे विवस्वते इन्द्राय मित्राय राजयक्ष्मणे पृथ्वीधराय आपवत्साय ब्रह्मणे चरक्यै विदार्य्यै पूतनायै पाप-राक्षस्यै स्कन्दाय अर्य्यम्णे जम्भकाय पिलिपिञ्जाय वासुदेवाय। नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन पूजयेत्। श्रियै वासुदेवगणाय पृथिव्यै। ८१। पृथिव्यर्घ्यमन्त्रस्तु। "हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे"॥ ततः प्रणम्य प्रार्थयेत् "शुभे च शोभने देवि! चतुरस्रे महीतले। सुभगे सुभगे देवि! गृहे काश्यपि रम्यताम्॥ अव्यङ्गे चाक्षते पूर्णे मुनेराङ्गिरसः सुते। तुभ्यं कृता मया पूजा समृद्धिं गृहिणः कुरु। वसुन्धरे वरा-रोहे स्थानं मे दीयतां शुभे॥ त्वत्प्रसादान्महादेवि! कार्य्यं

मे सिध्यतां द्रुतम्। अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः। तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन॥ ते गृह्णन्तु बलिं सर्वे वास्तुगृह्णाम्यहं पुनः"। इति मन्त्राभ्यां माषभक्तबलिं दद्यात्। ततः "प्रणमेदृष्टवक्त्रो मन्त्रेणानेन भक्तितः। भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिनोपपादितम्॥ अन्यत्र वास परिकल्पयन्तु क्षमन्तु तानीह नमोऽस्तु तेभ्यः"। ततस्तस्मिन् गर्त्ते दधिदूर्वापुष्पफलाक्षपल्लवमुखेनाम्बुपूर्णघटेन एषोऽर्घ्यः वास्तोष्पतये नम इत्यर्घ्यं दद्यात्। "विश्वाधाराय देवाय नमस्ते विश्वकर्मणे"। स्वाहेत्युवाच्य विश्वकर्मणे नम इति पूजयेत्। ततः "वास्तुदेवगणाः सर्वे पूजामादाय यात्रिकात्। इष्टकर्मप्रसिद्ध्यर्थं पुनरागमनाय च"। क्षमध्वमिति विसर्जयेत्। ततस्तदर्घ्यजलपूरितगर्त्ते प्रणवेन शुक्लपुष्पं क्षिप्त्वा शुभाशुभं पश्येत् निश्चल चेत् कर्त्तुः स्थैर्यं जनयति दक्षिणावर्त्तात् हितं वामावर्त्तात् विपदं नाशं भूमिच्छेदादिसमाप्तं मधुर्ता वा ततस्तत्र दधिदूर्वादिकं दत्त्वा मृत्तिकया गर्त्तं पूरयेत्। ततः सूत्रपाताय ईशानादि प्रदक्षिणाच्चतुरः कीलकान् "विशन्तु ते तले नागा लोकपालाश्च कामगाः। गृहे त्वस्मिंश्च तिष्ठन्तु आयुर्बलकराः सदा" इति मन्त्रेण चतुष्कोणेषु दृढं रोपयेत्। तत ईशानादिक्रमेण सूत्रेण तं वेष्टयेत्। तत आग्नेय्यां गर्त्ते गन्धपुष्पाद्यलङ्कृतं स्तम्भं रोपयेत्। तत्र मन्त्रः। "यथाचलो गिरिर्मेरुर्हिमवांश्च यथाचलः। शुभप्रदगृहस्तम्भ तथात्वमचलो भव"॥

अथ गृहप्रवेशः। "स्थाप्य समाप्यं क्रतुयूपकाष्टं गृहप्रवेशो गजवाजि बन्धः। ग्रामे प्रवेशो नगरे पुरे वा दिने प्रयस्थानि शनैश्चरस्य॥ ज्येष्ठादितिभ्यां सयुक्तं गृहारम्भोदि-

तत्र यत्। सम्यक् पीडयेद्देश्मप्रवेशे दैवचिन्तकः" ॥ विष्णुधर्म्मोत्तरे। "गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही। अनुलिप्तः सुवासा स्रग्वी सप्रलोकस्तथैव च ॥ कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम्। दत्त्वा हिरण्यवसनानि तदा द्विजेभ्यो माङ्गल्यशान्तिनिलयं निलयं विशेच्च"॥ महाभारते "पारावतमयूराश्च शुका वै सारिकास्तथा। गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता"॥ मत्स्यपुराणम्। "गोगजाश्वादिशालासु तत् पूरोपस्य निर्गमम्। अस्तं गते न कर्त्तव्यं देवदेवे दिवाकरे"॥ गृहमुपक्रम्य गोभिलः। "वर्जयेत् पूर्वतोऽश्वत्थमक्ष दक्षिणतस्तथा। न्यग्रोधमपराद्दे शादुत्तराच्चाप्युडुम्बरम्॥ अश्वत्थोऽग्निभयं कुर्य्यात् अक्षो ब्रूयात् प्रमायुकान्। न्यग्रोधो राजसं पीडां कुर्य्यादामयमुडुम्बरः"॥ अक्षः पर्कटी प्रमायुकान् प्रकृष्टपित्तानमायुः पित्तमित्यमरः। इति गृहारम्भप्रवेशौ।

"मृगानुराधवसुतिष्यविशाखहस्तचित्रोत्तराश्विपवनादितिरेवतीषु। जन्मर्क्षजीवबुधशुक्रदिनोत्सवाद्यौ धार्य्यं नव वसनमीश्वरदेवतुष्टौ। नववस्त्रपरिधानम्॥ पुष्यार्कादितिचित्रामित्रमघाभहरित्तधुराश्चहृषु मुक्तादन्तसुवर्णविद्रुममयान् दध्याद्विशुद्धे करो। पुष्टेऽर्के समये शुभे ध्रुवसुराचार्य्यादितीशेऽश्विना गो रत्नं विधयात् प्रवालकमयीन् शस्त्रं द्विता स्वामिने"। इति रत्नधारणम्। पूर्वं क्लीपुन्नामाख्येन विधाय पश्चात् स्त्रिया विशेषनिषेधः। "मृगेन्दुपुष्याश्विघ्राण्यपित्र्यमघाश्विमश्वानिलमूलिमत्र। खट्वादिसम्भारणमेषु कुर्य्यात् तिथौ विमन्ते च शुभे शुभाहे" इति खट्वादिधारणम्। "मैत्रेन्दुपौष्ण-पित्र्यमादितिवाजिचित्रा हस्तोत्तरात्रयरोहिणीविधातृभानि। एतेष्वभोज्ययानासनपादुकादि-सम्भोगकार्य्यमुदित

मुनिभिः शुभाहे"। श्रीपतिसंहितायाम्। "हस्तादिति ब्रह्मगुरूत्तरेषु पौष्णाश्विमूलेन्दुमचित्रभेषु। वारेन्दुजौवेष्व-सितेन्दुजानां शय्यासनादीनि हितप्रदानि"। चिन्तामणौ हारीतः। "हरिकरमहदनुराधाविभाख्यपौष्णादितिद्वयोत्तरभे भोजनविधिशय्यासनभोगारम्भो हितार्थाय" इत्यलङ्कारादि-धारणम्।

"पुष्या मैत्रकरोत्तरत्वष्टृवरुणब्रह्माम्बुपितेन्दुभैः शस्तोऽर्के शुभवारयोगतिथिषु क्रूरे स्ववीर्य्येषु च। पुष्पेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलालयस्य शस्तो जीवेन्दुपुत्रोदये। वारुणमूलविशाखसौम्यध्रुवहस्तपौष्णपुष्येषु। तरुगुल्मलतादीनामारोपणं प्रशस्तम्"॥ द्रुमादिरोपणम्।

अथ पुष्करिण्यारम्भः। मत्स्यपुराणे। "प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। आषाढ़े द्वे तथा मूलमुत्तरा त्रयमेव च॥ ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदे तथा। हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा॥ अनुराधा तथा स्वाती प्रति-ष्ठादिषु शस्यते"॥ अतीते मासे गत्यर्थस्य प्राप्त्यर्थत्वात्। भविष्ये। "प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा। दशमी त्रयोदशी चैव पौर्णमासी च कौर्त्तिता॥ सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः। एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायाग-कर्मणि"॥ व्यवहारसमुच्चये। "प्रतिष्ठा सर्वदेवानां केशवस्य विशेषतः। उत्तरायणमापन्ने शुक्लपक्षे शुभे दिने॥ कृष्णपक्षे च पञ्चम्यामष्टम्याञ्चैव शस्यते। द्वादश्येकादशीराका शुक्ले कृष्णे च पञ्चमी॥ अष्टमी च विशेषेण प्रतिष्ठायां हरेः शुभाः। ध्रुव लघु मृदुवर्गे वारुणे विष्णुदैवे भवदितिधनिष्ठे शोभने वासरे च। त्रिदशमदनजन्मैकादशे शीतरश्मौ विबुधक्कति-रभीष्टा नाड़िनक्षत्रहीने"॥ देवताघटनम्। प्रालेयवासव-

करादितिभाश्विनीषु पौष्णामरेज्यशशिभेषु तथोत्तरासु। कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे कार्य्या हरे शुभतिथौ विधिवत् प्रतिष्ठा॥ पुष्याश्विशक्रभगदैवतवासवेषु पौष्णानिलेशमघरोहिणीमूलहस्ते पौष्णानुराधहरिभेषु पुनर्वसौ च कार्य्याभिषेकतरुभूतपतिप्रतिष्ठा" ॥ महेशादिप्रतिष्ठा। ध्रुवमृदुलघुचलगणे रवि शुभवारेषु सुतिथौ दीक्षा। स्थिरलग्ने शुभे चन्द्रे कोणे शुभे गुरौ धर्मे। दीक्षाकरणम्। भुजबले। "युगादायने पुण्ये कर्त्तव्या विषुवद्द्वये। चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्व्वसु॥ या तिथिर्यस्य देवस्य तस्यां वा तस्य दीक्षणे। तस्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी" ॥ पद्मपुराणे। "प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः। श्रिया देव्या द्वितीया च तिथीनामुत्तमा स्मृता॥ तृतीया त्वथवान्या च चतुर्थी तत्सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च॥ सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी तिथिः। मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा॥ एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः" ॥ चक्रपाणिन इति चपव्यवहार इत्यस्मात्। "त्रयोदशी त्वनङ्गस्य शिवस्य च चतुर्दशी। मम चापि मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता" ॥ इति देवप्रतिष्ठा।

"शुभहरिघटलग्ने देवराट्पुष्यियाम्याविनयनविधियाम्यहस्तसर्पान्त्यभेषु सुकरणतिथियोगे शुक्रजीवार्कवारे तरणिघटनमिष्टं चन्द्रताराविशुद्धौ"। नौकाघटनं "शुभाहे विष्णुयुग्मेन्दुभगमैत्राश्विपाणिषु। चालनं घटनस्यामात् नावः शुभतिथीन्दुषु" ॥ त्रिष्वय नौकाचलनम्। "पत्रिकरेज्यसुधासुधाशिधिपूर्व्वाभिवरुणाच्युतभे शुभलग्ने। तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे" ॥ नौयात्रा। हारीतः। "जन्माधाने निधनगे प्रत्यरौ च विपत्करे। यदि व्याधिः

समुत्पन्नः क्लेशाय मरणाय वा ॥ यदा तारा: शुभाः पुंसां नक्षत्रस्याशुभं फलम् । तत्र नात्यन्तिकं श्रेयमिवमन्यत्र पण्डितैः ॥ तद्यत्र चन्द्रमास्तस्य गोचरे चाशुभप्रदः । तदा नूनं भवेन्मृत्युः सुधासम्पीतदेहिनः ॥ शिखिगुणरसेन्द्रियानलशशिविषयगुणर्त्तुपञ्चमपक्षाः । विषयैकचन्द्रयुग्मार्णवाग्निरुद्राग्निलदहनाः । भूतशतपक्षवसवो द्वौ त्रिंशच्चतताराकामानम्" ॥ तदनुसारेण फलकथनम् । "आर्द्रा श्लेषा स्वाती पूर्वा ज्येष्ठासु च यस्य रोगजन्म स्यात् । धन्वन्तरिणापि चिकित्सितस्य तस्यासवो न स्युः" कौशिकः । "कृत्तिकासु यदा व्याधिर्न्टणां संप्रतिपादितः । नवरात्रं भवेत् पीडा त्रिरात्रं रोहिणीषु च ॥ मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः । पुनर्वसौ तथा पुष्ये सप्तरात्रं विधीयते ॥ नवरात्रं तथाश्लेषे मासमेकं मघासु च । द्वौ मासौ पूर्वफल्गुन्यामुत्तरासु त्रिपक्षकम् ॥ हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम् । मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः ॥ मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम् । मूले न जायते मोक्षः पूर्वाषाढे त्रिपक्षकम् ॥ उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा । धनिष्ठायामर्द्धमासं वारुणाख्ये दशाहकम् ॥ न च भाद्रपदे मोक्ष उत्तरासु त्रिपक्षकम् । रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनौ ॥ प्राणैर्विमुच्यते नित्यं भरण्यां नात्र संशयः । कौशिकेन समादिष्टा नक्षत्रव्याधिसम्भवाः ॥ नक्षत्रं प्रतिकर्त्तव्यं नक्षत्रपथजानता । क्षीरवृक्षस्य समिधो जुहुयादश्विदैवते ॥ तिलसर्षपान् याम्ये घृतमेवाग्निदैवते । प्राजापत्ये जुहुयात्तु ग्राम्यबीजकरञ्जकम् ॥ सौम्ये गव्यं पयो रौद्रे सर्पिर्मधुसमन्वितम् । अदितिर्देवता यस्य घृताक्तास्तिलतण्डुलाः ॥ पायसं सर्पिषा चैव बृहस्पत्यधिदैवते । सार्पो-

पधिष पयश्च सर्पिः सर्पाधिदैवते॥ पितरो देवता यस्य घृताक्तास्तिलतण्डुलाः। भचता नाव्ययुताय भगे सर्पिस्तथोत्तरे॥ सावित्रे दधिहोमो लष्ट्रे चित्रौदन हविः। यवाः खात्याञ्च होतव्याश्चन्द्राग्निभे तु पायसम्॥ मैत्रे सर्पिस्तु जुहुयात्तदेव चेन्द्रदैवते। यथोपपन्नमन्नञ्च जुहुयान्नैर्ऋते तथा॥ अब्दैवते शालिबीजं वैश्वदेवे तु रूपकम्। रक्ताश्च तण्डुलाश्चाच होतव्या विष्णुदेवते॥ न्यग्रोधोडुम्बराश्वत्थसमिधो वसुदैवते। वारुणे वारिजातानां पुष्पाणां होम इष्यते॥ अजैकपादे होतव्यं माजापत्येन तत्समम्। अहिर्बुध्ने॥ नक्षत्रे पिष्टकाद्यं प्रशस्यते॥ पौष्णे फलान्यखण्डानि जुहेदष्टोत्तरं शतम्। सावित्रा हुतमेतत्तु ब्राह्मणाभिहितं पुरा॥ शाला चैव तु होतव्यं सद्यो ज्वरहरं परम्" ॥ भीमपराक्रमे। "अश्विन्यां पिष्टकछागमुखे दध्युदकञ्च देयम्। रोहिण्यां पिष्टकगोमुखे शाकम्॥ मृगशिरसि पिष्टकमृगमुखे माषो देयः। आर्द्रायां पिष्टकगोमुखे रक्तम्। पुनर्वसौ पिष्टकवराहमुखे पटोलम्। पुष्ये पिष्टकछागमुखे पायसम्। अश्लेषायां पिष्टकवराहमुखे घृतम्। मघायां पिष्टकवानरमुखे तिलाः। पूर्वफल्गुन्यां पिष्टकनरमुखे सुहृतिलपूपिकाः। उत्तरफल्गुन्यां पिष्टकबलीवर्दमुखे शाकम्। हस्तायां पिष्टकमहिषमुखे पुष्करमूलम्। चित्रायां पिष्टकव्याघ्रमुखे तगरपुष्पम्। स्वात्यां पिष्टकमार्जारमुखे तिलाः। विशाखायां पिष्टकव्याघ्रमुखे गुडभक्तम्। अनुराधायां पिष्टकमृगमुखे कुल्माषम्। ज्येष्ठायां पिष्टकमूषिकमुखे धन्याकम्। मूले पिष्टकमार्जारमुखे तिलम्। पूर्वाषाढायां पिष्टककुक्कुरमुखे वचा। उत्तराषाढायां पिष्टकहयमुखे शाकभक्तम्। श्रवणायां पिष्टकमहिषीमुखे रक्तम्। धनिष्ठायां पिष्टकनरमुखे शाकभक्तम्। शतभिषायां पिष्टक-

वानरमुखे पिप्पली। पूर्वभाद्रपदायां पिष्टकनरमुखे सित-तण्डुलाः। उत्तरभाद्रपदायामप्येवम्। रेवत्यां पिष्टकनरमुखे गुडभक्तम्"। अश्विनी भरण्योरप्येवम्। एवं नचत्रदोहदे कृते ज्वरो नश्यति। एतद्विधानन्तु प्रथमं गन्धपुष्पधूपदीपनैवेद्यैः सदीप-माल्यपताकैः प्रपूज्य कार्य्यम्। "उरगमर्त्ताभवार्द्रास्थ्ये हयाम्य-विपूर्वास्वपि च रविजभौमे चार्कवारेण योगे। यदि भवति चतुर्थी द्वादशी भूतषष्ठी निगदित इह जन्तोर्नाशकालः प्रविष्टः॥ चरराशौ विलग्नस्थे द्विदेहार्द्धे च पश्चिमे। रोगस्य प्रगमः प्रश्ने विपर्य्यासे विपर्य्ययः॥ शुभग्रहाः सौम्यनिरीचिताश्च विलग्न-सप्ताष्टमपञ्चमस्थाः। त्रिषड्दशा येषु निशाकरः स्यात् शुभं वदेद्रोगनिपीड़ितानाम्॥ पापश्चेषु प्रग्नलग्ने पापसंयुतवीचिते। तथैव चाष्टमस्थाने रोगिणां मरणं भवेत्"॥ मरणसूचकयोग-द्वयम्। "मन्दः पापसमेतो लग्नाद्वमः शुभैरयुतदृष्टः। रोगार्त्तः परदेशे चाष्टमगो मृत्युकर एव"॥ परदेशस्थस्य रोगज्ञानं मृत्युज्ञानञ्च। "मूलमघार्द्राश्लेषा भरणी विशाखाग्नि-दैवतेषु नरः। गरुड़प्रियोऽपि दष्टो न प्राणिति दन्दशूकेन॥ पालाञ्जनालेपनस्रावणैस्तु दैवविषं समुत्सारयति"॥ दष्टस्य गारुडीमूलं यदि दृष्टमग्रामलं भवति। गारुडी पुनर्नवा। "अर्कजटावल्कलमसृण चूर्णमतिशिशिरसलिलसंयुक्तम्। पीत-मह्निकमकमीनाशझयारिविपाणां विद्रावणम्॥ चोपसलिल-मसृणवर्त्तितकाकलिकामूलपानलेपनेन। अपसरति मण्ड-लिविषं मारुतविकृतमिव घनवृन्दम्"॥ चोपसलिलं काञ्जिकं काकलीमूलं गुञ्जामूलम्। "लज्जालुकामूलं नीलीमूलमात-पतण्डुलजलेन। मण्डलिविषमतिविषममपि पीतं निवा-रयति॥ यः पिवति पुष्यदिवसे जलपिष्टं सितं पुनर्नवा-मूलम्। पार्श्वेनापि न खलु विचरति तस्याहि वृश्चिको

षर्षम्" ॥ शातातपीयकर्मविपाके । "महापातकजं चिह्नं सप्तजन्मसु जायते । उपपातकजं पञ्च त्रीणि पापसमुद्भवम् ॥ दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमात् शमम् । जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ पूर्वजन्मकृतं पापं नरकस्य परिक्षये । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा । मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥ दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् । इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ जलोदरयकृत्प्लीहशूलरोगव्रणानि च । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः । दण्डापतान कश्चित्र वपुः कम्पविचर्चिकाः ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः । अर्शं आद्या नृणां रोगा अतिपापोद्भवा मताः ॥ अन्ये च बहवो रोगा जायन्ते रोगसङ्कराः । उच्यन्तेऽथ निदानानि प्रायश्चित्तानि च क्रमात् ॥ महापापे तु सर्वं स्यात्तदर्द्धमुपपातके । दद्यात् पापे तु पादांशं कल्प्य व्याधिबलाबलम् ॥ जपसुचावर्षं पुण्यं प्रदद्याद्देवतार्चने । दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी"॥ गोदानमधिकृत्यादिपुराणे । "परोगयैव जायेत तेजस्वी च भवेन्नरः" ॥ मनुः । "औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम्" ॥ "अगदो नैरुज्यम् ॥ शातातपः । "यथा निदानं दोषोत्थः कर्मजो हेतुभिर्विना । महारम्भोऽल्पके हेतावक्लिष्टो दोषकर्मजः" ॥ सारावल्याम् । पथ्याशिनो शीलवतो नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् । एवं विधानामिदमायुरत्र चिन्त्यं सदा ह्यमुनिप्रवादः" ॥ ध्यानमाह याज्ञवल्क्यः । "पथ्यापथ्यस्वेदयोगाद् यथा दोषस्य

संस्थितिः। विक्रियापि च दृष्टैवमकाले प्राणसंशयः" ॥ यथा चाविकलवर्त्मादिसत्त्वे प्रचण्डवातादिना दीपनाशस्तथा सत्यप्यायुषि चाशुभकर्मवशात् मौद्गलवत् युद्धापथ्यसेवित्वादिना प्राणनाश इति। आयुर्वेदे। "यथाशास्त्रन्तु निर्णीतो यथा व्याधिचिकित्सितः। न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः" ॥ तच्चिकित्सायां भारतीशभट्टाचार्यः। "दानैर्दयादिभिरपि द्विजदेवता गोगुरुवर्ननाप्रणतिभिश्च जपैस्तपोभिः। इत्युक्तपुण्यनिचयैरुपचीयमानाः प्राक् पापजा यदि रुजः प्रशमं प्रयान्ति" ॥ अतएव हेमाद्रिधृतदानखण्डे तत्तद्रोगे तत्तद्दानाभिधानपूर्वकं भगवद्वाक्यम्। "सुवर्णदानं सर्वेषां रोगाणां शमकारणम्। तस्मात् सर्वप्रयत्नेन कर्त्तव्यं कमलोद्भव" ॥ कर्मदोषोभयजव्याधौ च। "दानादिभिः कर्मभिरोषधीभिः कर्मक्षये दोषपरिक्षये च। निहन्ति ये यत्नवतां कथञ्चित्तत्कर्मदोषप्रभवा गदास्तु" ॥ अतएवोक्तम्। "प्रायश्चित्तमकृत्वा तु कर्म कुर्य्यान्न किञ्चन। अनिस्तीर्णमघं यस्माद्द्विगुणं परिपच्यते" ॥ केवलदोषजे तु। "लङ्घितदुष्टैरनिलादिदोषैरुपप्लुतैः स्वेषु परिस्खलद्भिः। भवन्ति ये प्राणभृतां विकारास्ते दोषजा भेषजशुद्धिसाध्याः" ॥ बृहस्पतिः। "अज्ञातौषधमन्त्रस्तु यश्च व्याधेरतत्त्ववित्। रोगिभ्योऽर्थं समादत्ते सदण्ड्यश्चौरवद्भिषक्" ॥ नन्दिपुराणे। "पथ्ये कं भौक्तं ज्ञात्वा जन्तुं यादृशतादृशम्। आयुर्वेदप्रभावेण किन्न दत्तं भवेद्भुवि" ॥ किन्न दत्तं भवेदिति सर्वदानफलं लभते इत्यर्थः। लिङ्गपुराणम्। "प्रायुष्ये कर्मणि क्षीणे लोकोऽयं दृश्यते मया। औषधानि च मन्त्राश्च न होमो न पुनर्जपः। त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्" ॥ इति काल-वाक्यम्। हरिवंशेऽपि। "दैवं पुरुषकारेण न शक्यमति-

वर्त्तितुम्" इति। "न स्पृशन्ति न शृण्वन्ति न पश्यन्ति गतायुषः। दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम्"॥ विष्णुधर्मोत्तरे। "हरिं गोद्विजचन्द्रार्कसुरान्नीत्वा प्रतिपूज्य च। शृण्वन् मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत्॥ ब्रह्मदक्षाश्विरुद्रेन्द्राभूचन्द्रार्कानिलानलाः। ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते॥ रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते"॥ स्वयं भक्षणे तु ते इत्यत्र मे इति पठेत्। अविशेषेण भक्षणेऽपि पठेत्। "हरुद्गोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे भैषूषपवनविशाखशिवेतरेषु लब्धचर्विष्टिरहितेष्वगदं शुभाय"॥ औषधकरणम् "चित्रायुगे विधियुगे मित्रयुगे लघुषु वासवविष्णौ। वस्तिविरेचनसेवा शुभदिनतिथिचन्द्रलग्नेषु"॥ वस्तिः चर्मपुटः विरेचनं विरेकः। वेधो व्रणादिवेधः। "पौष्णाश्विनी द्रविणशक्रसमीन्द्रपुष्याहस्ताऽऽदितौन्दुहरिमूलधृताग्निमैत्रे। चित्रान्वितेर्ध्ये गुरुधेन्दुरवीज्यवारे भैषज्यपानमचिरादपहन्ति रोगान्"॥ उत्तरात्रयेऽपि बहुलमृषीति वचनात्। रत्नमालायाम्। द्यूनमृतनिधनव्ययशत्रौ सद्ग्रहेषु नितरां बलवत्सु। आयुषश्च हितकारिणि योगे कीर्तिता नियतमौषधसेवा"॥ द्यूनादिषु पापयोगे चापशून्येषु आयुष्मानित्यादिनित्ययोगे। भीमपराक्रमे। "भैषज्यपाने गुरुसोमशुक्राः शुभा विलग्ने दिवसो रवेश्च। तिथावरिक्ते करणे च शस्ते योगे च लग्ने स्थिरशीर्षसञ्ज्ञे"॥ तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि। "ख्यादित्येषु चरेषु शक्रदिनकृत्पुष्योपचन्द्रेषु च। क्रूराह्व्यतिपातविष्टिदिवसेष्विन्दावशस्ते तथा॥ केन्द्रस्थेष्वशुभेष्वकामतिथिषु स्नानं गदो मुक्तितः। शस्तं तत्र न शोभनाविधिभुजङ्गर्क्षेन्दु सदाऽऽम्बरः"॥ रोगिस्नानम्। "सेवा

चक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे। पादयोः सप्त ऋक्षाणि साभिजिन्ति न्यसेद्बुधः॥ स्वामिमाद्यमं गच्छं भृत्यभात् स्वामिमं ततः। निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे"॥ सेवा चक्रम्। "ध्रुवलघुमृदुवर्गे वासवे विष्णुदेवे विकुजरविज-वारे केन्द्रकोणेषु सत्सु। हितनुहयभमध्याख्योदये चन्द्रशुद्धौ सुतिथिकरणयोगे दर्शनं भूमिपानाम्"॥ राजदर्शनम्। मत्स्यपुराणे। "राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तथा। पुरस्तात्तु तथा पश्चात् आसनन्तु विगर्हितम्॥ स्वयं तथा न कुर्वीत स्वगुणाख्यापनं पुनः। स्वगुणाख्यापने चैव परमेव प्रयोजयेत्। परार्थमस्य वक्तव्यं सुखे चेतसि भार्गव। स्वार्थं सुहृद्भिर्वक्तव्यं न स्वयन्तु कदाचन"॥ अथ राज्ञः। "अज्ञाप्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः। अहं किं करवाणीति वाच्यो राजा विजानता। नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा॥ चात्मसम्भावितश्चैव न भवेच्च कथञ्चन। आराधनासु सर्वासु भृत्यवत्स विचेष्टिते। कथासु दोषं क्षिपति वाक्यभङ्गं करोति च। विरक्तलक्षणं ह्येतदनुरक्तस्य लक्षणम्। दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात्। कुशलादि-परिप्रश्नो सम्प्रापयति चासनम्। इति रक्तस्य कर्त्तव्या सेवा रविकुलोद्भव। यदप्यल्पतरं कर्म तदप्येकेन दुष्करम्॥ पुरुषेणासहायेन किन्तु राज्यं महत्पदम्। कामं क्रोधं मदं मानं लोभं हर्षं तथैव च। जितव्यस्तरिषड्वर्गं सततं पृथिवी-क्षिता। न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते। न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः। अदीर्घसूत्रश्च भवेत् सर्वकर्मसु पार्थिवः। दीर्घसूत्रस्य नृपतेः कर्म नष्टं भवेत् स्वयम्। रोगे दर्पे च मान्ये च द्रोहे पापे च कर्मणि। अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते। भृत्यैः सह महीपालः परीक्षा-

सम्यक् वर्जयेत्। मृत्याः परिभवन्तीह नृपं हर्षणसत्कथम्। पौरुषं दैवसम्पत्त्या काले फलति पार्थिव। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन"॥ महाभारते। "लाभेन हर्षयेद् यस्तु न व्यथेद् यो विमानितः। असंमूढश्च यो नित्यं स राजवसतिं वसेत्। बलवान् शूर आत्मानञ्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्"॥ नयमाह हरिवंशे नारदः। "अनुक्तेनापि सुहृदा वक्तव्यं जानता हितम्। न्यायश्च प्राप्तकालश्च पराभवमजानता। वक्तव्यं सर्वदा सद्भिरप्रियञ्चापि यद्धितम्। प्राक्चक्षमेतत् कंसस्य सद्भिरेवाहृतं पुरा। यस्योत्तापकरं पश्चात् आरब्धं कार्यमीदृशम्। आरम्भेनैव तद्विद्वान् स च बुद्धिमतां मतः। कुमित्रे सौहृदं नास्ति कुभार्यायां कुतो रतिः। कुतः पिण्डं कुपुत्रे तु नास्ति सत्यं कुराजनि। कुसौहृदे क्व विश्वासः कुदेशे न प्रजीव्यते। कुराजनि भयं नित्यं कुपुत्रे सर्वदा भयम्। अपकारिणि विस्रब्धं यः करोति नराधमः। अनाथो दुर्बलो यस्तु न चिरं स तु जीवति। न विश्वसेद विश्वस्ते विश्वस्ते नातिविश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति। राजवैरिषु विश्वासं गर्भसङ्करितेषु च। यः करोति नरो मूढो न चिरं स तु जीवति। अग्निशेषमृणाच्छेषं शेषमग्नेश्च भूमिप। पुनर्वर्द्धन्ति सम्भूय ततः शेषं न शेषयेत्। अद्रोहं समयं कृत्वा मुनीनामग्रतो हरिः। जघान् नमुचिं पश्चादपां फेनेन पार्थिव। कृत्वा सम्बन्धकं चापि विश्वसेच्छत्रुणा न हि। पुलोमानं जघानादौ जामातापि शतक्रतुः। न चामर्षे निवस्तव्यं सवैरे वर्द्धिते रिपौ। पातयेत्तं समूलं हि नदीकूलमिव द्रुमम्"। विष्णुपुराणे। "अल्पहानिस्तु सोढव्या वैरेणार्थागमं त्यजेत्।

उपायतः समारब्धा सर्वे सिध्यन्त्युपक्रमाः" ॥ ज्योतिषे। "घस्रकं तदनुमन्दलोचन मध्यलोचनमतः सुलोचनम्। रोहिणीप्रभृतिभ चतुर्विधं नूनमत्र गणयेत् पुनः पुनः। लाभोऽस्यके निकट एव हृतस्य चौरैर्द्रव्यस्य लब्धिरिह केकरके प्रयत्नात्। दूरश्रुतिर्भवति मध्यमलोचनाख्ये न प्राप्तिरुत्तमविलोचनभे कदाचित्"। मत्स्यपुराणे। "कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रभृत्। येन सागरपर्य्यन्ता धनुषा निर्जिता मही। यस्तस्य कीर्त्तयेन्नाम कल्यमुत्थाय नित्यशः। न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः" ॥ कल्यं प्रातः।

अथ परीक्षा। "नो शुक्रास्तेऽष्टमेऽर्के गुरुसहिततनौ जन्मनामेऽष्टमेन्दौ विष्टौ मासि मलाख्ये कुजशनिदिवसे जन्मताराख्यचाथ। नाडीनक्षत्रहीने गुरु रविरजमीनाथ ताराविशुद्धौ प्रातः कार्य्या परीक्षा हितमृचरस्थिरगोदये शस्तलग्ने। षष्ट्यान्नु चतुर्दश्यां प्रायश्चित्तपरीक्षणे। न परीक्षा विवाहश्च शनिभौमदिने भवेत्। प्रायश्चित्ते अनुराधा स्वधनिष्ठा पुष्या हस्तात्रयं तथा। ज्येष्ठावारुणपौष्णे च नाट्यारम्भे शुभोगणः"। नाट्यारम्भ।

अथ कृषिकर्म। तत्र कूर्म्मचक्रम्। "प्राङ्मुखो भगवान्देव कूर्म्मरूपी व्यवस्थितः। आक्रम्य भारतं वर्षं नव भेदं यथाक्रमम्। मध्यप्रागग्नि याम्यादि कृत्तिकादित्रयत्रयैः क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिनः। पूर्वापरे भवेद्वेधो वेधयोस्तारदक्षिणे। ईशानश्चमोर्वेधो वेध आग्नेय मारुते। तारात्रयान्वितं तत्र सौरिं यत्नेन चिन्तयेत्। नाभिर्योपचतुष्पादकच्छपुच्छे च संस्थितम्। अतिवृष्टिरनावृष्टिः शलभा मूषिका खगाः। स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्ति च। एवं देशग्रामगेहनामर्क्षतो वदेत्" ॥ तथा च "यत्र यत्र

च मघत्वे दिव्यपार्थिवनाभसाः । दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीडयेत् । सौरिर्वाधिको दुष्टः सत्त्ववीर्यः शुभावहः । एकदा पीडयेद् यत्र भानुजः कूर्म्मपत्रके । तत्र स्थाने महाविघ्नो जायते नात्र संशयः । दुष्टस्थाने गते चन्द्रे कर्त्तव्यं शान्तिपौष्टिकम्" । कूर्माङ्गस्थदेशानाह । "मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः । पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः । मरुनैमिषविश्वाद्रिपाण्ड्यघोषाः सयामुनाः । काश्ययोध्या प्रयागश्च गया वैदेहकादयः । प्राच्यां मागधशोणौ च वारेन्द्रीगौडराढ़काः । वर्द्धमानतमोलिप्त प्राग्ज्योतिषोदयाद्रयः । आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः । कलिङ्गौड्रान्ध्रकिष्किन्ध्या-विदर्भशवरादयः । दक्षिणेऽवन्ति-माहेन्द्रमलयाऋष्यमूककाः । चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः । कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः । नैर्ऋते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः । यवनः पल्लवः सिन्धुः पारसीकादयो मताः । पश्चिमे हैहयास्ताद्रिम्लेच्छवासशकादयः । वायव्ये गुञ्जराटश्च नाटजालन्धरादयः । उत्तरे चीननेपालङ्गमकैकेयमन्दराः । गान्धारहिमवत्क्रौञ्चब्रह्ममादनमालवाः । कैलाशमद्रकाश्मीरम्लेच्छदेशाः खशादयः । ईशाने स्वर्णभौमश्च गङ्गाद्वारञ्च टङ्कनः । काश्मीरब्रह्मपुरकिरातादरदादयः" ॥ इति कूर्म्मचक्रम् । देवलः । "सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गौड्रान् गत्वा संस्कारमर्हति" ॥ तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिताक्षरा । व्यासः । "उपरा वहुला भूमिः पन्थानस्तस्कराहृताः । सर्वे वाणिजिकाश्चैव भविष्यन्ति कलौ युगे ॥ शस्यानिष्पत्तिरफला तरुणा वृद्धशीलिनः । भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणाम् ॥ पुरग्राम्यं वहुस्तोक तद्युगान्तस्य लक्षणम्" ॥ तत्र ग्रामादिषु

स्वनामफलम्। ज्योतिषे। "अवर्गेऽष्टाविधुः के च षट्चे वेदाष्टवर्गके। एकं ते सप्त पे वर्गे ये द्वयं शे च वह्नयः॥ इत्यमष्टसु वर्गेषु याः संख्याः कथिताः क्रमात्। नाम्निवर्गात् स्वराच्चैव प्रत्येकं तां प्रकल्पयेत्॥ एकीकृत्याष्टभिर्भुक्ते शेषसंख्या ध्वजादयः। ध्वजो धूम्रश्च सिंहः श्वा वृषभो रासभो गजः॥ ध्वाङ्क्षश्चक्रमतो ज्ञेयः फलं तत्र बलक्रमात्। ध्वाङ्क्षधूम्रवृषभा गजः सिंहो ध्वजः खरः॥ यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः। ग्रामे योधे पुरे देशे मित्रनारी गृहेषु च॥ बलात् प्रायो भवेल्लाभो न लाभो बलवर्जितात्। अ गरुडः क मार्जारश्च सिंहश्च शुनीसुतः॥ त भुजङ्गः प आखुः स्यात् य वर्गे भः श मेषकः। नामादिवर्णतो ज्ञेया अष्टौ वर्गाः क्रमादमी॥ यद्वर्गभक्ष्यो यः प्रोक्तस्तस्मात्तस्य भवेत् क्षयः। ग्रामवर्गस्य ये भक्ष्यास्त्याज्यास्तद्ग्रामवासिनः॥ एवं दुर्गे रणे त्यज्या न कर्त्तव्या गडाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशां क्रमात्। स्ववर्गात् पञ्चमे स्थाने खण्डिभङ्गश्च जायते"॥ व्यासः। "धनिनः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्"॥ मत्स्यपुराणे। "फालकृष्टे तथा देशे सर्व्वबीजानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठामध्याकनिष्ठाभूर्वर्जनीयेतरा मता"॥

अथ लाङ्गलचक्रं क्षरोदये। "लाङ्गले दण्डिका यूपं योक्त्रद्वयसमन्वितम्। दण्डिकादिलिखेद्भानि दिनेशाक्रान्तभादितः॥ दण्डिका हलयूपानां द्विदिक्स्थाने त्रिकं त्रिकम्। योक्त्रयोस्त्रिकञ्चैव मध्ये पञ्चाष्टकं द्वयम्॥ दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनो भयम्। लक्ष्मीर्योक्त्रयोर्ज्ञादौ चैत्रारम्भादिनर्च्चके"॥ इति लाङ्गलचक्रम्।

अथ वीजोप्तिचक्रम्। "सूर्य्यभाद्गुराः स्याप्यास्त्रिनाडीका-

न्तरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे॥ पुच्छे चतुर्बहिः पञ्च दिनमात्रं फलं वदेत्। वदने चौवकं विद्यात् गलकेऽङ्गारकस्तथा॥ उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्। इति रोगभयं राज्ये चक्रे वीजोप्तिसम्भवे"॥ सूर्यभात् सूर्यभुज्यमाननक्षत्रात्। विनाडीकान्तरक्रमादिति यद्यश्विन्यां रविस्तदा तामारभ्य गणयेत्। विनाडीषु अश्विनीभरणीकृत्तिका दत्त्वा रोहिणी बहिः कार्या मृगशिरस आर्द्रा पुनर्वसू नाडीषु दत्त्वा पुष्यो बहिः कार्यः एवं क्रमेणान्या लेख्याः। चौवक प्रजाशून्यताम्। ईतयः। "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः"॥ इति वीजोप्तिचक्रम्।

अथ हयचक्रम्। "हयचक्रं हयाकारं सर्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि हयनामर्क्षपूर्वकम्॥ मुखाक्षिकर्णग्रीवेषु शृङ्गे स्कन्धे द्विकं द्विकम्॥ चोणि पृष्ठे दश पुच्छेऽष्टौ पादे तूदरे त्रिकम्। हलप्रवाहवीजोप्तिप्रारम्भादिदिनर्क्षकम्॥ यदङ्गेषु स्थितं तस्मात्तस्य सर्वं शुभाशुभम्। आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा॥ ग्रीवे धृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं हयचक्रफलं बुधैः"॥ इति हयचक्रम्।

दीपिकायाम्। "पूर्वाग्नियाम्यफणिपित्र्यविशाख्यभेषु रिक्ताष्टमीविगतचन्द्रतिथिं विहाय। द्वाङ्गाभिगोधसुदाये विकुजार्किवारे शस्तेन्दुयोगकरणेषु हलप्रवाहः। हलप्रवाहवदीजवपनस्य विधिः स्मृतः। सितायाश्च शुभे केन्द्रे स्थिरे स्थमनुलोदये"॥ भोमपराक्रमे। "प्रागि कृष्यां धवलौ वृद्धं दक्षिणे लोहितं न्यसेत्। उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत्॥

हले तु योजिते यत्र चेत्रे ग्रासं करोति गौः। तत्र स्याद्विगुणं शस्यमवश्यं गर्गभाषितम्"॥ सत्यचिन्तामणौ बलभद्रः। "सुखदः प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटकृत् सदा॥ पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्थानदा भोग्या हर्षं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्वसिद्धा त्रयोदशी। चतुर्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमी षष्ठी रिक्ता च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुतिष्येषु पितृकरोत्तरेषु च अश्विनी वातपौष्णेषु सूनादितीन्दुभे तथा। वारे भानुशशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनयुग्मे कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः चेत्रपालञ्च पूजयेत्। सालङ्कारो हलधरः स्वग्निव पूजितं हलम्। दध्याक्षमधुभिः श्रेष्ठं फालाग्रञ्च प्रलेपितम्। कर्षं प्रावर्त्तयेत् प्राच्यां नूतनेन हलेन च। हस्ताश्विनितिष्यचन्द्रेषु ब्रह्मेन्द्रविष्णुवारुणे। वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च। वारे जीवशुक्रे च सोमे दिनकरे तथा। युग्मे युवति गो मीने शस्तं स्याद्बीजवपनम्"॥ राजमार्त्तण्डे। "प्राजेशभ्रवणोत्तरादिति मघा मार्त्तण्डतिष्याश्विनी पौष्णानुराधमरीचय भरणिया स्वातिविशाखा तथा। जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे"। देवलः। "गुरुसोमसूर्य्यशुक्राः चेत्राः सम्पत्कराः शुभाः। बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः। हन्ति मेषः पशून् सर्वान् स्वभावेनाथ वृश्चिकः। कर्कटे न भवेत् सौख्यं तुलाया न प्ररोहति। केशरी शस्यघाती स्यात् पार्थिवोपद्रवं

धनुः॥ मकरे चैव कुम्भे च भयमेव विनिर्दिशेत्। गोस्त्री-मन्मथमीनेषु शस्यं सम्पद्यते महत्॥ प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा। स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः॥ पृथ्वीञ्च ग्रहसंयुक्तां पूजयित्वा प्रजापतिम्। वह्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा॥ कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा। मुखपार्श्वे तयोर्लिम्पात् फालाग्रं कनकैः स्पृशेत्॥ उत्तराभिमुखो भूत्वा चोरेणार्घ्यं प्रदापयेत्। ततः शुभकरः श्रीमान् कृषिकर्म समाचरेत्॥ वर्जयेद्वन्ध्यवृषञ्च सुरभग्नञ्च वर्जयेत्। विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा॥ हलप्रवाहनं कार्य्यं नीरक्षिः कृषिकर्मकैः। हलादिभिर्हलैः क्षेमं कुद्दलेन शुभं वदेत्॥ वृषभा यदि मुह्यन्ति तस्य विघ्नप्रदा भवेत्"॥ कृषिरिति शेषः "तस्मात् सर्वप्रयत्नेन निर्विघ्नं कारयेत् सदा। एका जयकरी रेखा द्वितीया चार्थदायिका॥ पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा। यत ऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततो भवेत्॥ संपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम्। हेमनिघृष्टफालाग्रं छिन्नरेखां न कारयेत्॥ स्मर्त्तव्या वासवश्चेन्द्रः पृथूरामः सचन्द्रमाः। पराशरो बलभद्रः सर्वविघ्नोपशान्तये॥ हले प्रवाह्यमाने तु कूर्म्म उत्पद्यते यदि। वृद्धिणी म्रियते तस्य ततोऽन्यैव भयं भवेत्॥ लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति। ईशाभङ्गो यदा कर्त्तुः संशयो जीवितस्य च॥ सुतनाशो युगाभङ्गे समौने म्रियते सुतः"॥ समौने योक्त्रवन्धनकाष्ठद्वये। "योक्त्रच्छेदे तु व्याधिः शस्यहानिश्च जायते। हले प्रवाह्यमाने तु गोरेकः प्रपतेद् यदि॥ प्रपतेन्मुख्यमात्रस्तु बन्धनं स प्रपद्यते। ज्वरातिसाररोगेण कृषिभङ्गे विनिर्दिशेत्॥ प्रवाह्यमानस्तु ततो गोः प्रपतेत् यदि। मनुष्यास्तेन नश्यन्ति

ततो ग्रस्यं चतुर्गुणम्॥ हेमवारिविलिप्तस्य बीजस्योत्रयतः शुचिः। इन्द्र चित्ते निधायाथ स्वयं मुष्टिवयं वपेत्॥ कृत्वा धान्योन्मप्रोत्साहं नर्त्तको हृष्टमानसः। प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत्॥ त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कार्यं सिद्धां शुभे कुरु॥ बीजन्तु सर्वशस्यानि काले देव प्रवर्षतु। कर्षकास्तु भवन्त्वग्रा धान्येन च धनेन च स्वाहा"॥ कल्पतरौ ब्रह्मपुराणम्। "चैत्रे च शाण्डपञ्चम्यां कामोरा च रजस्वला। नित्यं भवति तस्मात्तां ज्ञात्वा गोमयीं स्त्रियम्॥ अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम्। पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च"॥ काश्मीरा पृथ्वी। "षष्ठ्यान्तु ततः स्नाप्य ताभिरेव गृहे गृहे। सुभाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च॥ अनन्तरं द्विजैः स्नाप्य सर्वौषधियुतैर्जलैः। गन्धैर्विलेपयेद्रत्नैः फलैः सिद्धार्थकैस्तथा॥ स्नापयित्वा च तां देवीं गन्धमाल्यैश्च पूजयेत्। तन्निवेदितमिष्टन्तु माशितव्यं गृहे गृहे॥ अतःपरं स्नाता गर्भं गृह्णाति ऋतुमेदिनी"॥ तथा "ब्रह्मा विष्णुश्च रुद्रश्च आख्यया: सुरभीगृहे। इन्द्र प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः॥ बलदेवे हलं भूमिर्हृषभं रामलक्ष्मणौ। रक्षोघ्नी जानकी सीता युगं गगनमेव च"॥ सीता लाङ्गलपद्धतिः। युग युगकाष्ठम्। "एते द्वाविंशतिः प्रोक्ता प्रजानां पतयः शुभाः। गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे॥ अर्घ्यैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक् पृथक्। हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः"॥ तथा। "इमा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह"॥ बीजवपनं प्राजापत्यतीर्थेन यथा हारीतः। "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति। राजमार्त्तण्डे। "नित्यं दश हले सप्तौ नित्यं पञ्च हले

धनम्। नित्यश्च विधवे भर्त्ता नित्यमेकदले धनम्॥" होम-तर्पणे लाजहोमखनकादितर्पणे पराशरः। "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणी रवौ। अतःपरमिमधमं न जातु श्रावणे शुभम्"॥ ज्योतिषे। "पूर्वभाद्रपदा मूलं रोहिण्युत्तर-फल्गुनी। विशाखा शतभिषा चाथ धान्यानां रोपणे वरा॥ सदोसा रसनौं मौलीं पुत्रविसैर्वियुज्यते। स्वयं जाते पुनस्ते द्वे पालयनेव दुष्यति॥ आरामे गृहमध्ये वा मोहात् सर्वप-मावपन्। परामर्षं रिपुयोति सहाधनधनक्षयम्॥ निम्बा मौली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र सर्वं निघ्नन्ति मङ्गलम्"॥ निम्बा हरिद्रा। कोविदारको रक्तकाञ्चनः। "हिमालयसा हलवौजं धात्री सम्येव रोपयेत्। वसुधेति शुभेतिति पुष्पदेति धवेति च॥ नमस्ते शुभगे नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागवकुलाम्रप्रियङ्गवः॥ माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचु-मर्दमेकं द्वौ चम्पकौ केशरस्य नवराणि॥ तालाष्टकं श्रीफल-सप्तकञ्च प्रवालरोपी नरकं न पश्येत्"॥ दानरत्नाकरे देवी-पुराणम्। "ये च पापा दुराचाराः शीतकम्पेदकारिणः। तेऽप्यवौच्यादिनरके पच्यन्ते ब्रह्मणो दिनम्॥ यत्रास्ते सोम-मामानां प्रब्रजकोर्त्तिता भुवि। तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः। न च नन्दत्यय कोऽपि यत्र श्रीपल-भेदिनः"॥ श्रीतरुविशः। "किञ्चित्यागस्तर्कनापि सन्य गम्येषु प्रयत्नेत्। न व्याधिकोटिविंशत्यां भयं तत्र भवेत् क्वचित्॥ किंहि: प्रथमतरङ्गतरम्भसदृत्तामयोच्च यनोर्दे ये श्रीमद्रामभद्रपादाः कुशलिनः सन्द्रतटे नानाप्रमाणमध्याम-रावां मध्ये चरमचरणोहेभाद्रूर्म वसमुले वासुदेवं परमक-प्रसाद्यं श्रीमद्दनुमतामाज्ञापयन्ति चतुष्कश्चात्सम्पदंते पाता-

भोऽम्भोगाम्भोदतीपाण्डरमुण्डोधूलो शृङ्गारतस्याक्षयरा श्वता-फड़िङ्गा एलावानरा गङ्ड़ा ड्मडुकमहिष्यादिरोगम्। स्वच्छ-यतश्चणमपि विलम्बं माचरतः विलम्बं कारयत तदा युष्मान् मतच्छ्ंं कारयामीति। ग्रां ग्रीं ग्रौं श्रीरामाय नमः"॥ इति शस्येषु बन्धयेत्।

अथ मुष्टिग्रहणम्। दीपिकायाम् "याम्याजपादाश्वि-भवानलतोयशक्रचित्रेतरेषु कुजार्कजवारवर्जम्। शस्तेन्दु-योगकरणेषु तिथौ विरिक्ते धान्यच्छिदिः स्थिरनरस्तमृगोदयेषु"॥ बलभद्रः। "रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः। पितृ-देवे तथा सौम्ये धान्यच्छेदं मृगोदये"॥

अथ धान्यच्छेदनप्रकारः। "सपतौ मासमुहो च यवधान्ये सक्षाण्डके। छिन्द्यात्तिलस्य निष्पत्तमेतत् पाराशरं मतम्"॥ पराशरः। "न मुष्टिग्रहणं कुर्यात् कदाचिद्वटपौषयोः। ईशाने लवनं कुर्यात् सार्धमुष्टिद्वयं शुचिः॥ पौष्णे पुष्ये शुभाहे वा पूजयित्वेष्टदेवताम्। शस्यविघ्नप्रशान्त्यर्थं चेलं वा द्रव्यभोज-नम्"॥ बौधायनः। "वस्त्राश्वगजाधान्यानां गवां चैव रजः शुभम्। अप्रशस्तं समूहिन्याः श्वाजाविखरवायसाम्"॥ समूहिनी संमार्जनी। कल्पचिन्तामणौ मेधिरोपणम्। "वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा। औडुम्बरी तथा धात्री या चान्या क्षीरधारिणी॥ स्नोभाद्धो कर्षकैर्नित्यं मेधिः कार्य्या फलप्रदा"॥

अथ बीजसञ्चयः। "हस्ता चित्रादितिस्वाती रेवत्यां श्रवणद्वये। स्थिरे लग्ने गुरौ शुक्रे बीजं धार्य्यं शुभावहे॥ माघे वा फाल्गुने वापि सर्वबीजानि संग्रहेत्। शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत्॥ ततश्च पुटिकां बद्धा शोषयेच्च पुनः पुनः। स्थापयेच्च प्रयत्नेन यथा भूमिश्च न स्पृशेत्॥ दीपा-

ग्निना च संसृष्टं दुष्टा चोपहतञ्च यत्। वर्जनीयं तथा बीजं यत् स्यात् कीटसमन्वितम्॥ याम्याग्निरुद्राहि विशाखपूर्वा-माहेन्द्रपित्र्येतरभेः शुभाहे। धान्यादिसंस्थापनमेषु शस्तं मृगस्थिरद्व्यङ्गघटेशोदयेषु॥ सौम्यादितिमघा ज्येष्ठानुत्तरेषु च कारयेत्। मीने लग्ने शुभे चन्द्रे निर्धनक्रूरवर्जिते॥ लेख्यं कोष्ठके धान्यं गर्गो वदति सर्वदा। धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ नम ईशायै ईशादेवी सर्वलोकविवर्द्धिनी कामरूपिणि धान्यं देहि स्वाहा। लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्"॥ पुराणसर्वस्वे। "मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्। पतञ्च धान्यराशेस्तु मूषिकादिनिवृत्तये॥ हविर्यदिश्‌खगमनं स्यादभिनवास्तु मारीषु। व्ययमपि शस्यफलानां न बुधो बुधवासरे कुर्यात्॥ त्रिपूत्तरे रेवत्यां धनिष्ठा वारुणेषु च। एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः॥ श्रवणास्य विशाखा ध्रुवपौष्णपुनर्वसूनि पुष्यस्य। धनिन्यस्य ज्येष्ठा धनधान्यविवर्द्धिनी कथिता"॥ धान्यादिस्थापनम्। "कुम्भमासेऽपि सर्वेषां मन्दिरारम्भमुपक्रमम्। सद्दर्यः प्रशंसन्ति धान्यागारं विशाय च"॥ अत्र प्रयोगः। पौर्णमास्यन्तचैत्रीकृष्णपञ्चम्यां पृथ्वी रजस्वला तां दिनत्रयमेकस्मिन् पर्वताकारे उच्चप्रदेशे सधवाः स्त्रियः प्रपूजयेयुरष्टम्यां तां स्नापयित्वा ताः पूजयेयुः। ततः शुभदिने बीजवपनदिने वा सर्वौषधिगन्धबीजरत्नफलश्वेतसर्षपैः पृथ्वीं स्नापयित्वा गन्धादिभिः पूजयेत्। नैवेद्यमेषञ्च पयाज्ञोत्तव्यम्। अथ हलप्रवाहदिने बीजवपनदिने च कृतस्नानादिराचान्तो गर्त्तं चैत्रे कृत्वा जलेनापूर्य तत्र प्रजापतिं सूर्यादिनवग्रहान् पृथ्वीञ्च पूजयेत्। "हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे"॥ इति मन्त्रेण

क्षीरेणार्घ्यं दद्यात्। ऐशान्यां पुष्पनैवेद्यैः प्रणवादिनमोऽन्तेन ब्रह्मणे नमः नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन त्रिःपूजयेत्। रुद्राय काश्यपाय सरस्वत्यै इन्द्राय तदर्घ्यमन्त्रस्तु। "शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः। शतयज्ञाधिपो देव तुभ्यमिन्द्राय वै नमः"॥ प्रचेतसे पर्जन्याय मेघाय चन्द्राय धर्माय वह्नये बलदेवाय हलाय भूमये वृषभाय रामाय लक्ष्मणाय जानक्यै सीतायै स्वर्गाय गगनाय इति द्वाविंशति पूजयेत् क्षेत्रपालमग्निं दिक्षश्च पूजयेत्। अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात्। पाकपक्वौदनदधीनि गर्ते निक्षिप्य मृत्तिकाभिः पूरयेत् कष्टौ हयौ नवनीतेघृतेन वा मुखपार्श्वयोर्निक्षिपेत्। हलप्रवाहकान् गन्धादिना भूषयित्वा हलं माल्यादिभिः पूजयित्वा दधिघृतमधुभिः फालाग्रं प्रक्षिप्य हेम्ना फालाग्रं घर्षयित्वा कर्षयेत् वस्निन्दुघुरामिन्दु पराशरबलभद्रान् स्मरेत्। एका तिस्रः पञ्च रेखा कृषेन कार्य्याः भग्नशृङ्गखुरलाङ्गूलाः कपिलाश्च वृषा न योक्तव्या हलप्रवाहकाश्च समर्थाः कर्त्तव्याः हलानि नवानि दृढ़ानि कर्त्तव्यानि वृषभयुद्धादिकं न शुभदं वृषभाणां मर्द्दनेन चतुर्गुणं शस्य मूत्रपुरीषोत्सर्गे तथा। बीजवपने त्रिदशमधिकं सुवर्णजलसंयुक्तं बीजमुष्टित्रयम् इन्द्र ध्यायन् स्वयं प्राजापत्येन तीर्थेन वपेत् उभयत्रैव प्राङ्मुखः जलपूर्णकलसं गृहीत्वा "त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु॥ रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च" स्वाहेति प्रार्थयेत्।

अथ षष्टिसंवत्सरगणना। "शकेन्द्रकालः पृथगाकृति २२। घ्नः शशाङ्कनन्दाश्वियुगैः ४२९१ समेतः। शराद्रिवसिन्दु

१८७५। हृत सलब्ध षष्ठ्यावशिष्टा प्रभवाद्योऽब्दाः। वर्षं
वर्जन्तु यच्छेष सूर्य्यैः सपूर्य्य खोर्मिभि। ६०। हृत व्युत्क्रमत
खाग्निहृतेऽशे मासकाद्य"॥ अस्यार्थः। शाकेन्द्रकाल
शक राजाब्दकाल पृथक् आकृतिघ्न २२। द्वाविंशत्या पूरित
शशाङ्कनन्दाश्वियुगैरङ्कनवत्यधिकशतद्वयाधिकचतुःसहस्रैः सम
न्वोऽङ्क शराद्रिवस्विन्दुहृत पञ्चसप्तत्यधिकाष्टादशशतैर्यावत्
सख्य हर्त्तुं शक्नोति तावता हृत कर्त्तव्य सलब्ध पूर्वशकाब्द
शरेत्यादिना लब्धसंख्यया युत कार्य्य षष्ठ्यासमेधे षष्ठ्यादेषोऽङ्क
पूर्ववत् षष्ठ्याहृतलब्धस्यावशिष्टे प्रभवादय एकावशेषे प्रभव
द्व्याद्यवशिष्टे विभवादि वर्षंवर्जन्तु यच्छेष वर्षातिरिक्त शरा
द्रिवस्विन्दुहृतावशिष्ट तत् सूर्य्यैर्द्वादशभि सपूर्य्य खोर्मिभि
षष्ठ्याहृते व्युत्क्रमत इत्यनेन षष्टिहृतावशिष्टा षड्गा दण्डा
षष्टिहृतलब्धांशके खाग्निहृते त्रिंशता हृतेऽवशिष्टा अथवा
लब्धा मासा स्युरिति। प्रभवादि वर्षाण्युपक्रम्य "आद्या तु
विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता। तृतीया रुद्रदैवत्या
श्रेष्ठा मध्याधमा भवेत्"॥ भविष्यपुराणे भैरव उवाच।
"वत्स्यच्छ कथयाम्यत्र क्रूरा सौम्याश्च ये प्रिये। संवत्सरफल
मुख्य प्रभवादौ वरानने॥ बहुतोयास्तथा मेघा बहुशस्या च
मेदिनी। बहुक्षीरास्तथा गावो व्याधिरोगविवर्जिता॥
प्रशान्ता पार्थिवाश्चैव प्रभवे परिकीर्त्तिता।१। "सुभिक्ष
क्षेममारोग्य सर्वे व्याधिविवर्जिता। प्रशान्ता मानवास्तत्र
बहुशस्या वसुन्धरा। हृष्टास्तुष्टा जना सर्वे विभवे च वरा
नन"।२। "रोगा बहुविधाश्चैव मनुष्या वाजिकुञ्जरा। सर्वं
एव प्रनश्यन्ति शुक्ले वर्षे वरानने"।३। "उत्सवश्च जगत् सर्वं
धनधान्यसमाकुलम्। नित्योत्सव प्रजावृद्धि प्रमोदे जायते
प्रिये"।४। "नीरोगाश्च निराबाधा मानवा विगतद्विष।

बहुचौरास्तथा गावः प्राजापत्ये वरानने"।५। "निरातङ्कं जगत् सर्वं धनयौवनगर्वितम्। अङ्गिरसि प्रजाः सर्वा नित्योत्साहा वरानने"।६। "सुभिक्ष क्षेममारोग्यं वर्षाकालं सुशोभनम्। शस्यहानिं विजानीयात् श्रीमुखे सुरवन्दिते"।७। "बहुचौरास्तथा गावो धान्यञ्च बलवत्तरम्। जायन्ते सर्वशस्यानि भावे वर्षे वरानने"। ८। महार्घं जायते सर्वं घृततैलरसादिकम्। प्रजानाञ्च भवेद्वृद्धिर्युविसवत्सरे शुभे।९। "निष्पत्तिः सर्वशस्यानां मध्या धातरि कीर्त्तिता। इक्षुचौरगुडादीनां प्रबलत्वं वरानने"॥१०। "सुभिक्ष क्षेममारोग्यं कार्पासस्य महार्घता। लवणं मधुगव्यञ्च ईश्वरे दुर्लभं प्रिये"।११। "सुभिक्षं क्षेममारोग्य प्रशान्ताः पार्थिवाः प्रिये। तस्करोपहृतं वित्तं बहुधान्ये वरानने"॥ १२। "राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैश्चोपपीडनम्। जानीयाद्विपदं घोर प्रमाथिनि वरानने"।१३। "जायन्ते सर्वशस्यानि मेदिनी निरुपद्रवा। लवणं मधुगव्यञ्च महार्घं विक्रमे प्रिये"॥ १४। "कोद्रवाः शालिमुद्गाश्च शस्युमाषास्तथैव च। महार्घं जायते सर्वं वृषे च सुरवन्दिते"।१५। "चनकामुद्गमाषाश्च अन्यच्च विदलं प्रिये। महार्घं जायते सर्वं चित्रभानौ वरानने"। १६। "सुभिक्षं क्षेममारोग्यं विश्वञ्च निरुपद्रवम्। व्यवहारो भवेत् हृष्टः स्वर्भानौ देवपूजिते"।१७। "अतिवृष्टिश्च जायेत धान्यस्याथ प्रपीडनम्। शस्यं भवति सामान्यं दारुणे सुरवन्दिते"।१८। "बहुशस्यानि जायन्ते सर्वदेशे सुलोचने। सौराष्ट्रे लाटदेशे च पार्थिवे नात्र संशयः"।१९। "दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम्। अनावृष्टिः समाख्याता व्यये मवत्सरे प्रिये"।२०।"उद्यतो वर्षणे मेघो जलं नैवोपजायते। महार्घं सर्वजिद्वर्षे सर्वमेव वरानने"।२१। "कोद्रवाः शालि-

शूद्राश्च कर्म्मापापास्तथैव च। सुलभं जायते सुस्थं जगद्वै सर्व-धारिणि"। २२। "मनन्निप्रबला लोका धान्यौषधिप्रपीड़नम्। जायते मानुषे कष्टं विरोधिनि न संशयः"। २३। "सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते। शिरोवक्षोऽक्षि-रोगाय पापाद्धि विक्षते जनाः"। २४। "उपद्रुतं जगत् सर्वं तस्करैर्मूषिकैः खगैः। पीड़िताश्च प्रजाः सर्वाः देशभङ्गा खरे प्रिये"। २५। सुभिक्षं क्षेममारोग्यं शस्यं भवति शोभनम्। बहुक्षीरास्तथा गावो नन्दने नन्दने प्रिये"। २६। "अल्प-तोयास्तथा मेघा वर्षन्ति खण्डमण्डले। नश्यन्ति सर्वशस्यानि विजये नात्र संशयः"। २७। "क्षत्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः। पीड़िताम्ते वरारोहे जये सर्वे न संशयः"।२८। "सरोगञ्च तथा देवि दारुणज्वरसमन्वितम्। अभिभूतं जगत् सर्वं मन्मथे सुरवन्दिते"। २९। "चौरधान्यक्षयो देवि सर्व-शस्यमहार्घता। व्यवहाराश्च नश्यन्ति दुर्मुखे दुःसुखाः प्रजाः"॥ ३०। "पीड्यन्ते सर्वशस्यानि देशे देशे शुचिस्मिते। हेमलम्बे प्रजाः सर्वाः पीड्यन्ते नात्र संशयः"। ३१। "तस्करैः पार्थिवै-श्चैव अभिभूतमिदं जगत्। अर्घो भवति सामान्यो विलम्बे ■ भयं महत्"। ३२। "विषमस्थं जगत् सर्वं विरोधे भय सम्भवम्। विकारी सर्वतोपायी मम वाक्यन्तु नान्यथा"।३३। "क्वचिद्वर्षति पर्जन्यो देशे संच्छिन्नमण्डलः। दुर्भिक्षं सर्वरीवर्षे व्यवहारो विपर्य्ययः"। ३४। "दुर्भिक्षं जायते सर्वा मेदिनी दुष्यति प्रिये। प्लवे प्लवन्ति तोयानि पीड़िता मानवा भुवि"। ३५। "सुवर्णरूप्यधान्यानि जगत् सर्वं सुशोभनम्। ब्राह्मणा वणिजस्तुष्टाः सुभिक्षे शुभकृत् प्रिये"। ३६। "सुभिक्षं क्षेम-मारोग्यं वसा गोब्राह्मणाः प्रिये। सुखिताः शोभने वर्षे प्रजाः सर्वाः सुलोचने"। ३७। "विषमस्थे जगत् सर्वे व्याकुलं सस्-

दाहृतम् । जनानां जायते भद्रे क्रोधे क्रोधः परस्परम्" ।३८। "सर्वत्र जायते क्षेमं सर्वशस्यमहार्घता । विश्वावसौ वरारोहे कार्पासस्य महार्घता" । ३९ । "पार्थिवैर्नृपसैन्यैश्च समस्तैः खण्डमण्डले । प्रपीड्यन्ते जनाः सर्वाः भयभीताः पराभवे" । ४० । "तृणधान्यानि पीड्यन्ते ग्रीष्मे वर्षति वासवः । प्लवङ्गे पीड़िताः सर्वाः प्रजाश्च सुरवन्दिते" । ४१ । "जायन्ते सर्वशस्यानि सुभिक्षं निरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजा कीलके च शुभं वदेत्" । ४२ । "सुभिक्षं क्षेममारोग्य सुखञ्च निरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजा सौम्ये सौख्यं प्रकीर्त्तितम्" ।४३। "तोयपूर्णो भवेन्मेघो वर्षते च दिने दिने । निरुपद्रवाश्च राजानः सर्वसाधारणे प्रिये" । ४४ । "वासवो वर्षते देवि ! देशे चाखण्डमण्डले । अच्छिद्यन्ते कान्यकुब्जे विरोधिकृतिनाशकृत्" । ४५ । "अभिभूतं जगत् सर्वं लोकैर्बहुविधैः प्रिये । मारुतैः फलदाश्चैव परिधाविनि शोभने" । ४६ । "निष्पत्तिः सर्वशस्यानां सुभिक्षं भवति प्रिये । प्रमाथिनि जनोद्गारी जलदो मोदते प्रजाः" । ४७ । "निष्पत्तिः सर्वशस्यानां सर्वशस्यमहार्घता । घृतं तैलसमं याति आनन्दे नन्दिनि प्रजाः" । ४८ । "कोद्रवाः शालिमुद्गाश्च पीड्यन्ते वरवर्णिनि । सर्वौषधीनि धान्यानि राक्षसे निष्ठुराः प्रजाः" । ४९ । "दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीडनम् । अनले च समाख्यातं शास्त्र कार्य्या विचारणा" ।५०। "देशभङ्गः सदुर्भिक्षं समासात् कथयाम्यहम् । पिङ्गले चारुपर्णाक्षि दुर्भिक्षं नर्मदातटे" । ५१ । "गोमहिष्यो विनश्यन्ति ये चान्ये नटनर्त्तकाः । वासवो वर्षते देवि शस्यञ्च न हि जायते" ॥ "तिलसर्षपमाषादिकार्पासानां महार्घता । गोमहिष्यः सुवर्णानि कांस्यताम्राद्यशेषतः ॥ तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः । तेन

धान्येन लोकोऽयं मिस्तरिष्यति दुर्दिनम्॥ पार्थिवामोपकादीना कालयुक्ते प्रपीडिता"।५२। "तोयपूर्णा स्मृता मेघा बहुशस्या च मेदिनी। निष्ठुरा पार्थिवा देवि सिद्धार्थे च वरानने।५३।'अल्पतोयघनाश्चैव कीटका प्रबला स्मृता। विरुद्धा पार्थिवा देवि रौद्रे संवत्सरे प्रिये"।५४। "दुर्भिक्ष मध्यम प्रोक्त व्यवहारो न वर्त्तते। भवेद्दै मध्यमा वृष्टिर्दुर्मतौ समुपस्थिते"।५५। "दुर्भिक्ष जायते लोका सर्वे द्रविणवर्जिता। प्राणिना जायते चर्चा दुन्दुभौ वरवर्णिनि"।५६। "मद्धिपौगोहिरण्यादितास्नकाद्याद्ययेपत। तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चय॥ रक्ते सवत्सरे देवि क्रूरबुद्धिर्नराधिप। मानवा क्रूरचेष्टाश्च सग्रामे रुधिर भवेत्"।५७। "दुर्भिक्ष मरण घोर धान्यौषधिप्रपीडनम्। पापरोगो भवेद्देवि रक्ताक्षेऽरवर्ण्डिनि'।५८। "रोगी मरणदुर्भिक्ष विरोधीत्तरसङ्कुलम्। क्रोधे तु विषम सर्वं समाख्यात हर प्रिये"।५९। "मेदिनी लभते देवि सर्वभूत चराचरम्। देशभङ्गश्च दुर्भिक्ष चये सचीयते प्रजा॥ सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कने तथा। दुर्भिक्ष जायते घोर चये संवत्सरे प्रिये॥ कौमुदी नर्मदाद्याश्च यमुना नर्मदातटम्। विन्ध्याद्या सैन्धवश्चापि विनश्यति न सशय॥ सिंहल मध्यदेशश्च कालञ्जर तथैव च। चये चयन्ति सर्वाणि नान्यथा वरवर्णिनि"।६०। वराहसंहितायाम् "नक्षत्रेण सहोदयमस्त वा याति येन सुरराजमन्त्री।* तत्सञ्ज्ञ कर्त्तव्यं वर्षं मासक्रमेणैव। वर्षाणि कार्त्तिकादीनि आग्नेयाद्भद्वयानुयोगीनि क्रमशस्त्रिभञ्च पञ्चममन्त्यमुपान्त्यञ्च विज्ञेय नक्षत्रेण गुरुभुज्यमाननक्षत्रेण। आग्नेय कृत्तिका पञ्चम फाल्गुन वर्षम् अन्त्यमाश्विनम् उपान्त्य भाद्रम्। अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गु

नव विभो मतः। शेषा मासादिमा ज्ञेया कृत्तिकादिव्यवस्थया। द्वे द्वे चित्रादितारायां पूर्णपर्वेन्दुसङ्गते। समायेवादयो ज्ञेया स्त्रिभिः षष्ठान्त्यसप्तमाः” इति सद्वर्षणकाण्डाच्च। पूर्णपर्वेन्दुसङ्गते पौर्णमासीयुते द्वे द्वे तारे तदेकवाक्यतया पूर्ववचने पौर्णमासी लाभः। यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणामपि गुरोः कृत्तिकादावस्तोदयसम्बन्धात् कार्त्तिकादित्वं तेन कृत्तिका रोहिण्योरेकतरस्मिन् गुरो रस्तोदयेऽन्यतरलाभे कार्त्तिकं वर्षम् एवं मार्गशीर्षादि। अत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तं गतो गुरुरन्यतरस्मिन्नुदेति तत्र का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं ततः पौषमित्यादिक्रमाद्गतिरिति। फलानि च। शकटानलोपजीविकपीडा व्याधिशोकः वृद्धिस्तु रक्तपीतककुसुमानां कार्त्तिके वर्षे ॥ १ ॥ “सौम्येऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च शस्यनाशः। व्याधिभयं मित्रैरपि भूपानां जायते वैरम्” ॥ २ ॥ “शुभकृज्जातः पौषो मिथ्यवैराः परस्परं भूपाः। द्विविगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिः” ॥ ३ ॥ “पितृपूजापरिवृद्धिर्माघे हार्दश्च सर्वभूतानाम्। आरोग्यवृष्टिधान्यार्घसम्पदो मित्रलाभश्च” ॥ ४ ॥ “फाल्गुने वर्षे विद्यात् क्वचित् क्वचित् क्षेमवृष्ट्यादिशस्यानि। दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः” ॥ ५ ॥ “चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा मृदवः। वृद्धिश्च कोषधान्यस्य भवति पीडा च रूपवताम्” ॥ ६ ॥ “वैशाखे विगतभया धर्मपराः प्रमुदिताः प्रजाः सनृपाः। यज्ञक्रियाप्रवृत्तिर्निष्पत्तिः सर्वशस्यानाम्” ॥ ७ ॥ “ज्येष्ठे जातिकुलधर्मश्रेणी श्रेष्ठा नृपाः स्वधर्मज्ञाः। पीड्यन्ते धान्यानि च हित्वा कङ्गुशमीजानि” ॥ ८ ॥ “आषाढे जायन्ते शस्यानि क्वचित् वृष्टिरन्यत्र। योग-

क्षेमं मध्यं शस्यव्यया भवन्ति भूपाः" ॥ ८ ॥ "श्रावणे वर्षे क्षेमं शस्यानि पाकमुपयान्ति। क्षुद्रा ये पार्थिवास्ते पीड्यन्ते ये च तद्भक्ताः" ॥ १० ॥ "भाद्रपदे वल्लीजं निष्पत्तिं याति सर्वशस्यञ्च। न भवत्यपरं शस्यं क्वचित् सुभिक्षं क्वचिच्च दुर्भिक्षम्" ॥ ११ ॥ "आश्वयुजेऽथ्यजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमम्। प्राणचयः प्राणभृतां सर्वेषामर्थबाहुल्यम्" ॥ "रुद्रमेवाद्रुतिथ्यद्रिविश्वदेवोनविंशतिः। ११। १०। ८। १५। ७। १३। १८। सप्तभिः शेषितच्छाकात् क्रमाद्वर्षादिकं वदेत्। वर्षा धान्यं तृणञ्चैव शीतं घर्मं समीरणम्। प्रजावृद्धिं तथा शस्यं राजविग्रहमेव च" ॥ रुद्रमेवक्रुतिथ्यद्रिविश्वदेवोनविंशतिः। एकादशसदशनवपञ्चदशसप्तत्रयोदशोनविंशतयः। तत्र सप्तभिष्टे शकाब्दे एकावशेषे तद्वर्षे रुद्रसंख्या वर्षा मेघसंख्यं धान्यमित्यादि। मालान्यायेन वङ्गमेवाभ्यां चयविग्रहौ ज्ञेयौ। एवं द्व्यवशेषे मेघसंख्या वर्षादि। एवमन्यत्र। "जीवार्कबुधमन्दारकाव्यचन्द्रमसः क्रमात्। राजा मन्त्री जलाधीशः शस्यपोऽद्रिहृतात् शकात्" ॥ अत्रापि मालान्यायेन सप्तहृतशकाब्दे एकावशेषे जीवो राजा अर्को मन्त्री बुधो वर्षाधिपः शनिः शस्याधिपः द्व्यवशेषे रव्यादिरेवमन्यत्र। राजफले शौनकः मार्त्तण्डे। "परिशोषमेति सलिलं सोमे पयो विस्तरं क्षौणीजेऽपि च वर्षणं कथमपि ज्ञे च प्रभूतं पयः। पृथ्वी शस्यवती गुरौ भृगुसुते शस्यञ्च नानाविधं मन्दे प्राणिकबन्धशङ्कघवला वर्षाधिपे निश्चितम्। लग्नेशो जन्मराशीशो यस्मिन् वर्षे नृपो भवेत्। उच्चस्थो वा हर्षितो वा क्रूरोऽपि शुभमादिशेत्। विधु ते शाकवर्षं तु चतुर्भिः शेषिते क्रमात् ॥ आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ॥ पुष्करो दुष्करजलो द्रोणः शस्य-

प्रपूरकः। पूर्वाषाढ़ां गतो भानुर्जीमूतैर्यदि दृश्यते। तदा त्रयोदशाहानि मिथुनादिषु वर्षति" ॥ भुजबलभीमे। "व्रजति यदि कुजः पतङ्गमार्गं घट इव भिन्नतलो जलं ददाति अथ भवति दिवाकराग्रतश्चेत् प्रलयघनानपि शोषयत्यवश्यम्। यावन्मार्त्तण्डसूनुश्चरति धनुरथो मन्मथं मीनकन्ये तावद् भिक्ष-पीडा भवति च मरणं क्षुत्पिपासादिघोरम् उर्व्वी निस्सूर्य्य-शब्दाग्रवधिरपटले नर्त्तयन्ते पिशाचाः ग्रामाः शून्या भवेयुर्नर-पतिरहिता व्याप्तकङ्कालमाला। वक्रं करोति रविजो धरणी-सुतो वा मूलर्क्षहस्तमघरेवतिमैत्रभेषु। कन्नोपभङ्गपतनादि च वैनिकानां सर्व्वत्र लोकमरणं जनधौतदेशः। यदा च सौरिः सुरराजमन्त्रिणा समेत्य तिष्ठेत् क्वचिदृक्षमण्डले। तदा-ङ्गवङ्गाम्बुककोशलेषु विभागशेषां कुरुते वसुन्धराम्। तिष्ठेतां यावदेकर्क्षे वाक्पत्यवनिजौ यदि। तावत् क्षुद्रोगसंग्रामात् प्रजानां क्षयमादिशेत्। आरभ्य शुक्लप्रतिपत्तिथि मार्गात्तु चैत्रकं गर्भोनीहारजलदैरिति प्रावृट्परीक्षणम्। यत्रक्षं गतवति विधौ जायते तत्र गर्भः पश्चात्तस्मात्सवतिशतके चाह्नि तस्य प्रसूतिः" ॥ वराहः। "पञ्चम्यादिषु पञ्चसु कुम्भेऽर्के यदि भवति रोहिणीयोगः। अधमतमाधममध्यममतिमहद-म्भसां पातः। प्रतिपदि मधुमासे भानुवारः सितायां यदि भवति तदा स्यान्निर्जला वृष्टिरब्दे। अविरतजलधारासान्द्र-विन्दुप्रवाहैर्धरणितलमशेषं व्याप्यते सोमवारे। अवनितनय-वारे वारिहृष्टिर्न सम्यक् बुधगुरुसितवारे शस्यसम्पत् प्रमोदः। जलनिधिरपि सौरे शुष्यते क्वाम्बुहृष्टिः सकलमिदमुदारेणाम्बु-वेदं पृथिव्याम्। आषाढ्यां पौर्णमास्यां सुरपतिककुभोवा-तिवातः सुवृष्टिम्। शस्यध्वंसं प्रकुर्य्यादिह दहनदिशो मन्द-वृष्टिर्यमेन। नैर्ऋत्यां निष्फला स्यात् वरुणबहुजलो वायुना

पातुकोपः कौवेर्य्यां शस्यपूर्णा भवति समुदिता मेदिनी शम्भ-
साधि। रवेः कर्कटसंक्रान्तौ द्रेक्काणत्रयभेदतः। आदिमध्या-
न्तभेदेन वर्षायाः कालनिर्णयः। त्रिंशद्योजनविस्तीर्णं
शतयोजनमायतम्। आढकस्य प्रमेयानं मुनिभिः परि-
कीर्त्तितम्। युग्माजगोमीनगते शशाङ्के रविर्यदा कर्कटकं
प्रयाति। जलं शताढ़ं हरिकार्मुकेऽर्द्धं वदन्ति कन्या मृग-
योरशीतिम्। कुलीरकुम्भालि तुले शताड्रे पड़भिच युग्मां
नवतिं वदन्ति। समुद्रे दशभागाः स्युः षड़भागाश्चापि पर्वते।
पृथिव्यां चतुरो भागान् सदा वर्षति वासवः। दशादिभिस्तु
भागाड्रैः पूरयित्वा शतादिकम्। विंशत्या हारलब्धाड्राः
समुद्रादौ प्रकीर्त्तिताः"। यदा। १००। तदास ५० प ३० पृ २०
यदा ५० स २५ प १५ पृ १० यदा ८० स ४० प २४ पृ १६
यदा ८६ स ४८ प २८ रेखाचयम्। पृ १८। रेखैका प्र-
माटका ज्ञेयाः। षाड्देदिनद्वयं क्वत्वा पौषे पौषादिना बुधः।
गणयेत् कार्त्तिकीं दृष्टिमदृष्टिं वानिलक्रमात्। मतान्तरञ्च
चापे च मीने परिहत्तभागे। ज्येष्ठे शुचौ कर्कटके च सिंहे
कन्यातुलायां मकरे च कुम्भे मार्गे स्वयं शाम्यति पौषमासः।
शुचेर्निर्गामे प्रथमेऽतिदृष्टिः शस्यानि सर्वाण्युपयान्ति सिद्धिम्।
चाद्ये द्वितीये तिलमुद्गमाषा भागे तृतीये चलु शारदानि।
चित्रास्वातीविशाखासु ज्येष्ठे मासि निरभ्रता। तास्वेव श्रावणे
मासि यदि वर्षति वर्षति। शुचौ शशे नवम्याञ्चेत् उदेत्यर्को
निरभ्रकः। परिवेशो मध्यदिने चास्तं यातो घनावृतः। वयं
दिक्षमथैवं वा दृष्टिमिष्टां समादिशेत्। चन्द्रेपायां गतो भानु-
र्यदि दृष्टिं न मुञ्चति। मघापञ्चकमासाद्य करोत्येकार्णवां
मही‍म्। चतुर्थ्यां कर्कटस्यार्के दृष्टिर्जातपदे यदि। विफलाः
सर्वसंक्लेशाः कर्षकाणां भवन्ति च। हष्टे द्युभागे प्रथमे सुदृष्टि-

भवेत् द्वितीये तिलकीटसर्पाः। दृष्टिस्तु मध्यापरभागदृष्टे-र्निष्फिद्रदृष्टिस्तु निशाप्रवृत्ते। स्वातीमैन्द्रेन्द्ररुद्रेषु प्राजापत्यो-त्तरासु च। मघरन् जलदान् हन्ति भौमः संवर्त्तकानपि। चित्रां गते भृगौ जीवे मोरियुक्तेऽम्बुवर्षणम्। शुभायुक्तसिंह-कुजे घोषं याति महाघनः। पापयर्ग्गशुभायुक्त तुलाशुक्रे महार्घता। प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः। सूर्यसुतात्नवपञ्चमगो वा सप्तमगश्च जलागमनाय। श्रीपतिव्यवहारनिर्णये। "माघे मासि च सप्तम्यां पञ्चम्यां फाल्गुनस्य च। चैत्रस्य तृतीयायां वैशाखप्रथमेऽहनि मेघस्य गर्जितं श्रुत्वा जलदस्य च दर्शने। आरभ्य चतुरो मासान् सम्यग्वर्षति वासवः॥ सप्तम्यां स्वातियोगे यदि भवति नभो दृष्टचन्द्रार्कतारं विज्ञेया प्रावृडेषा बहुजलविपुला सर्वशस्यानु-कूला। धर्म्मप्रश्ने सलिलराशिमाश्रित्य चन्द्रो लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे। सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टो-ऽल्पमम्भः प्रावृट्काले सृजति हिमदः चन्द्रवत् भार्गवोऽपि। प्रश्नात् सद्यो दृष्टिज्ञानम्। "ययोकराशौ वसतः सितेन्दुजौ पयोऽतिपूर्णां कुरुते वसुन्धराम्। तयोश्च मध्ये यदि पद्म-बान्धवो न संशयं शोषमुपैति मेदिनी। विनोपघातेन पिपी-लिकानामण्डोपसंक्रान्तिरहिव्यवायः। द्रुमादिरोहश्च भुजङ्ग-मानां दृष्टिनिदानानि गवां प्लुतानि। रथ्यासु शिशवः सेतून् रचान् भेकांश्च कुर्वते पवनश्च यदा शीतो वाव्यायाश्च विव-र्त्तनम्। गवां निरीक्षणं व्योम्नि तदाखेव प्रवर्षति"॥ भौम-पराक्रमे। "तरुशिखरेषु गताः सकलासा गगनतलस्थिरदृष्टि-निपाताः। यदि गवां निरीक्षणमूर्द्ध्वं निपतति वारिपतन-मचिरेण। यदि स्थिता गृहपटलेषु कुक्कुरा रुवन्ति वा यदि वितत दिवोन्मुखाः दिवातत्तं सुदिन पिनाकिदिङ्मुखा तथा

समा भवति जलौघसम्भुता निदाघवातातप उष्णशीतले रटन्ति मण्डूकशिवाद्विचातका मयूरकण्ठद्युति सूर्यमण्डले दिनत्रय वा विपतन्ति भूतले"॥ बृहस्पति। "कुसीद कृषिवाणिज्य प्रकुर्वीता स्वय कृतम्। आपत्काले स्वयकुर्वन्नैनसा लिप्यते द्विज॥ राज्ञे च दत्त्वा षड्भाग देवतानाञ्च विंशकम्। त्रिंशद्भागञ्च विप्राणा कृषि दत्त्वा न दोषभाक"॥ तथा "मूषित घातित यत्र सीमायाञ्च समन्तत। अकृतोऽपि भवेत् माघी मासस्तत्र न सशय"॥ हारीत। "अष्टागव धर्म्महल षड्गव जीवितार्थिनाम्। चतुर्गव नृशसाना द्विगव ब्रह्म घातिनामिति विष्णुधर्म्मोत्तरे पाठ। "अह्न पूर्वे द्वियाम वा धर्य्याणा वाहन स्मृतम्। विश्रामेन्मध्यभागे च भागे चान्ते यथासुखम्"॥ उशना। "गोभि प्रणाशित धान्य यो नर प्रतियाचते। पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकस"॥ ज्योतिषे। 'इन्द्रपूरीरव मूल्य पचादौ लघयेद्बध। उद्रमूले सम विद्यात्स्वल्पे धान्यमध क्रय॥ हस्ताश्वतभिषा पूर्वादि त्रयरोहिण्य। उत्तरादित्रयकृत्तिकामूलारेवत्य इत्येताच चरात् सूचिता॥ रवौ शनौ कुजे वारे पौषे दर्शो भवेद् यदि। तदा धान्यस्य मूल स्याद्देकद्वित्रिगुण क्रमात्॥ दर्शे पौषस्य रात्रौ चेत् ज्येष्ठामूलाजलानि च। क्रमान्मूल्यविवृद्धि स्यात् धान्याना वत्सरे तथा॥ सक्रान्ति ऋक्ष तिथिवारयुक्त द्वयाधार रामहत भवेत्तु। एके समर्घ समता द्वितीये शून्ये महार्घ मुनयो वदन्ति॥ यमाहिशक्राग्निहुताशपूर्वा नेष्टा क्रये विक्रयणे प्रशस्ता पौष्णाश्विचित्राशतविष्णुवाता क्रये हिता विक्रयणे निषिद्धा"॥ विष्णुधर्म्मोत्तरे "इमानि यानि त्वचाणि चराणि च मृदूनि च। वाणिज्ये तानि शस्यन्ते तिथि रिक्ता विवर्जयेत्॥ प्रतिपद्वादशीषष्ठीनघनादि

ध्रुवाणि च । कुयोदे वर्जनीयानि दिनं सूर्य्यसुतस्य च" ॥ अथ-विक्रयनक्षत्राणि । "दर्शाष्टमीभूततिथिप्रभेशपूर्वोत्तराक्लेशव-याम्यचित्राः । क्रूराहविष्टिव्यतिपातयोगा नेष्टा गवां विक्रय-चालनादौ ॥ चाजं यमदग्नमहित्रयच शक्रद्वयं वायुयुगं महेशः । कार्य्यो न चैतेषु धनप्रयोगो मूढो गते चाप्यमृतं न देयम्" ॥ धनप्रयोगनिषेधः ।

अथाद्भुतम् । अद्भुतसागरे आथर्वणाद्भुतवचनं प्रकृति-विरुद्धमद्भुतवचनम् । प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबो-धाय देवाः सृजन्तीति । तेनापज्ज्ञानाय भूम्यादीनां पूर्वं स्वभावप्रच्युतो देवकर्तृकोऽद्भुत इति । एवञ्च बुधोदयपर्वणि ग्रहादीनां गणितागणितत्वेन प्रकृतानामपि यदुत्पातत्वं तन्नात्र तत्कारणञ्च गर्गसंहिता-वार्हस्पत्ययोः । "अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः । नरापचाराभियतमुपसर्गः प्रवर्त्तते ॥ ततोऽपचाराभियतमपवर्जन्ति देवताः । ताः सृजन्त्यद्भुतां-स्तान्तु दिव्यनाभसभूमिजान् । त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः । विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च" ॥ तांश्च परं न दर्शयेदित्याह विष्णुः । "नोत्पातं दर्शयेदिति" । तत्र वेलाभेदेन मण्डलनिरूपणम् । यथा दीपिकायाम् । "प्राग्दिविचतुर्थयामेषु धुनिशोरद्भुतेषु सर्व्वेषु अनिलाग्निशक्र-वरुणा मण्डलपतयः शुभाशुभाभेये । अर्य्यमादिचतुष्कचन्द्र-तुरगादित्येषु वायुर्भवेत् दैवेज्याजविशाखयाम्ययुगले पित्र्यद्वये चानलः । विश्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः सर्पो-पान्त्यभृगन्त्यमूलयुगले शाम्भवपामीश्वरः । पवनदहनौ नेष्टौ योगस्तयोरतिदुष्करः । सुरपवरुणौ प्रस्तौ योगस्तयोरति-शोभनः सवरुणमरुग्निपः शक्रस्तथाग्निसमायुतः । फल-विरहितः ऐन्द्रो वायुस्तथाग्नियुतोऽशुभः । यन्मण्डलेऽद्भुतं

जात शान्तिस्तद्दैवताश्रया तथा शान्तिद्वयं कार्यं मण्डल हयजाद्भुत" ॥ विष्णुधर्मोत्तरे। "ग्रहर्चवैकृत दिव्यमान्तरीच निबोध मे। उल्कापातो दिशा दाह परिवेशस्तथैव च॥ गन्धर्वनगरश्चैव दृष्टश्च विकृता तथा। एवमादीनि लोके ऽस्मिन् नाभसानि विनिर्दिशेत्। चराचरभव भौम भूकम्प मपि भूमिजम्। जलाशयानां वैकृत्य भौम तदाव कीर्तितम्। भौम चाल्पफल ज्ञेयं चिरण परिपच्यते। नाभम मध्यफलद मध्यकालफलप्रदम्। दिव्य तीव्रफल ज्ञेय शीघ्रकारि तथैव च। शीतोष्णताविपर्यासो ऋतूना विपुल भयम्। पुष्पे फले च विकृत राज्ञो मृत्यु तथा दिशेत्। अकालप्रसवा नार्यः कालातीता प्रजास्तथा। विकृता प्रसवाश्चैव युग्मप्रसवन तथा। हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा चय। पशव पक्षिणश्चैव तथैव च सरीसृपा। विनाश तस्य देशस्य कुलस्य च विनिर्दिशेत्। प्रदोषे कुक्कुटारावो हैमन्ते चापि कोकिला। अर्कोदयेऽर्काभिमुख श्वारावो नृभय दिशेत्। उलूको वसति यत्र निपतेद्वा तथा गृहे। ज्ञेया गृहपतेर्मृत्युर्धननाशस्तथैव च। गृध्र कङ्क कपातश्च उलूक श्येन एव च। चिल्लश्च चर्मचिल्लश्च भास पाण्डर एव च। गृहे यस्य पतन्त्येत गेह तस्य विपद्यते। षण्मासात्तथा वर्षान्मृत्यु स्याद् गृहमधिन। पत्नी पुत्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति। ब्राह्मणाय गृह दत्त्वा दत्त्वा तन्मूल्यमव वा। गृह्णीयाद् यदि रोचेत शान्ति क्षेमा प्रयोजयेत् मासाश्रोनि समादाय श्मशानाद् गृध्र-वायसा। श्वाशृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत्। विकिरन्ति गृहादौ च श्मशान सा मही भवेत्। चोरश्च हन्यते लोक परचक्रसमागम। सघामय महाघोरो दुर्भिक्ष मरकस्तथा। अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रव। अकाले

फलपुष्पाणि देशविद्रवकारणम्" । मत्स्यपुराणे । "अतिवृष्टि-रनावृष्टिर्दुर्भिक्षादिभय मतम् । अनृतौ तु दिनादूर्द्धं वृष्टि-र्ज्ञेया भयाय च । निरभ्रे चाथ रात्रौ वा श्वेतं याम्योत्तरेण तु । इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च । दिग्दाहपरिवेशौ च गन्धर्वनगरं तथा । परचक्रभयं विद्याद्देशोपद्रवमेव च" । भामो वनकुक्कुटः । कंसनिधनसूचने हरिवंशः । "वक्रमङ्गा-रकश्चक्रे चित्रायां घोरदर्शनः । चचाल्यपर्वणि मही गिरीणां शिखराणि च" ॥ वायोस्थाने स एव । "दक्षिणां दिशमा-स्थाय धूमकेतुः स्थितो भवेत् । वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः" ॥ कृत्यचिन्तामणौ । "त्यक्ता गौचविवेकतत्त्व वसुधा लोकाः क्षुधापीडिताः विप्रा वेदहतास्तथापचलिता वह्नाग्निना दुःखिताः । क्षोणी मन्दफला नृपाश्च विकलाः सपापघोरा मही प्रेताघातदुरन्तपीडिततरा देवेज्यराहूयुतौ । रक्ते गात्रोदयोगो मार्गाश्रितग्रादिभिर्मरकः । धान्यहिरण्यत्वक-फलकुसुमाद्ये वर्षिते भयं विद्यात् । अङ्गारपांशुवर्षे विनाश-मुपयाति तन्नगरम् । उपलं विना जलधरैर्विकृता वा यदा प्राणिनो दृश्याः । छिद्रं वाप्यतिवृष्टिं शस्यानामीति संजन-नम्" । बुधकौशिकसंवादे । "वक्त्राः पतति च फलं शरटस्य प्ररोहणे । मौर्यं राजश्रियोऽवाप्तिर्भानौ चैश्वर्यमेव च । कर्ण-योर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् । नासिकायाश्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् । कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् । धनलाभो बाहुमूले करयोर्धनहृदयः । स्तनमूले च सौभाग्य हृदि सौख्यविवर्द्धनम् । पृष्ठे नित्यं महीलाभः पार्श्व-योर्बन्धुदर्शनम् । कटिद्वये वस्त्रलाभो गुह्ये सुहृत्समागमः । जङ्घे चार्थक्षयो नित्यं गुदे रोगभयं भवेत् । ऊर्वोस्तु वाह-नावाप्तिर्जानुजङ्घेऽर्थसञ्चयः । वामदक्षिणयोः पादोर्भ्रमण

नियतं भवेत्। वल्म्याः प्ररोहणे चैव पतने शरटस्य च। व्यत्यासाच्च फलञ्चैव तद्वदेवं प्रजायते। वल्म्याः प्ररोहणं रात्रौ शरटस्य प्रपातनम्। निधनार्थाय भवति व्याधिपीडा विपर्य्यये। पतनानन्तरञ्चैवारोहणं यदि जायते। पतने फलमुत्सृष्टं रोहणेऽन्यत् फलं भवेत्। आरोहणञ्चोर्द्ध्ववक्त्रे अधोवक्त्रे च पातनम्। भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम्। स्पृष्टमात्रेण यः सद्यः सचैलं जलमाविशेत्। पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम्। वल्लीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत्। पूजयेद्गन्धपुष्पाद्यैस्तदग्रे पूर्णकुम्भके। पञ्चगव्यं पञ्चरत्नं पञ्चाम्रतं च पल्लवम्। पञ्चकूचकषायञ्च निक्षिप्याप्लावयेत्ततः। पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथा क्रमात्। मृत्युञ्जयेन मन्त्रेण समिद्भिः खदिरैः शुभैः। तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम्"। वल्ली गृहगोधिका। मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्र इति विद्याकरः। गर्गसंहितावार्हस्पत्ययोः। "ये तेषु शान्तिं कुर्व्वन्ति न ते यान्ति पराभवम्"। ये तु न प्रतिकुर्व्वन्ति क्रिययाऽश्रद्धयान्विताः। दाम्भिक्याद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात्"। अत्र निमित्तनियमतोऽधिकारः अन्यथा दोष इत्याह मत्स्यपुराणम्। "भिन्नमण्डलवेलायां ये भवन्त्यद्भुताः क्वचित्। तत्र शान्तिद्वयं कार्य्यं निमित्ते सति नान्यथा। निर्निमित्तकृता शान्तिर्निमित्तमुपपादयेत्"। एतच्च तत्तद्विशेषविहितशान्तिविषयम्। अन्यथा वेलामण्डलसन्देहे शान्तिर्न स्यात्। अतएवोक्तं योगियाज्ञवल्क्येन। "यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः। तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः"। गायत्र्या प्रयतः शुद्धः सर्व्वपापैः प्रमुच्यते। शान्तिकामस्तु जुहुयात् गायत्रीमक्षतैः शुचिः। हन्तुकामश्च नृपतिर्दूर्व्वेन जुहुयात् शुचिः। सावित्र्या शान्तिहो-

मांश्च कुर्य्यात् पर्यन्तु नित्यगः। प्रणवव्याहृतिभ्याञ्च स्वाहान्ता-होमकर्मणि। प्रतिलोमा प्रयोक्तव्या फट्कारान्ताभिचारिके"। विश्वामित्रेणापि निमित्तसन्देहे कृच्छ्रादीन्युक्तानि यथा। "कृच्छ्रचान्द्रायणादीनि शुद्धाभ्युदयकारणम्। प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे"। मार्कण्डेयपुराणम्। "दिग्-देशजनसामान्यं नृपसामान्यमात्मनि। नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभम्। परस्पराभिरक्षाभिर्ग्रहदोषेषु जायते"। तथा। "तस्माच्छान्तिपरः प्राज्ञो लोकवादरत-स्तथा। लोकवादांश्च शास्त्रोक्त ग्रहपीडासु कारयेत्। भूदी-क्षानुपवासांश्च प्रशस्तचैत्याभिवन्दनम्। कुर्य्यात् होमं तथा दानं स्नानं क्रोधविवर्ज्जनम्। अद्रोहं सर्व्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः। वर्ज्जयेदुक्ततीं वाचमतिवादांस्तथैव च। ग्रहपूजाञ्च कुर्व्वीत सर्व्वपीडासु मानवः। एवं शाम्यन्त्यशेषाणि घोराणि द्विज-सत्तम। प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यनेकशः"। लोक-वादाश्च तत्रैवोक्ता यथा। "आकाशाद् यतनाच्च देव्यादीनाञ्च सौहृदात्। पृथिव्यां प्रतिलोके च लोकवादा इति स्मृताः"। ते च सर्व्वभूतडाकिन्याद्यभिभवशान्त्यर्थं लौकिकौषधमन्त्रा-दयः विपद्धरीमङ्गलचण्डिकामोतादयः चैत्यवृक्षादौ चैत्र-पालदेवतापूजा च। तथा चापस्तम्बः। "स्त्रीभ्योऽवर-वर्णेभ्यो धर्म्मशास्त्रं प्रतीयादित्येक इति"। धर्म्मशेषान् श्रुतिस्मृतिसदाचारेष्वप्रसिद्धानिति नारायणोपाध्यायः। भूदो-हश्च पात्रं विना भूमौ गोस्तनं निष्पीड्य दुग्धोत्सर्गः। चैत्यः पूज्यत्वेन ख्यातो वृक्षः। तथा च बाणोत्पाते हरिवंशः। "अनेकशाखश्चैत्यश्च निपपात महीतले। अर्च्चितः सर्व्वकन्या-भिर्दानवानां महात्मनाम्" ॥ उपतीमकल्याणीम्। अति-वादश्च पूज्यमतिक्रम्य भाषणम्। मत्स्यपुराणम्। "काकस्वै-

करवश्राव: प्रभाते दुःखदायकः। काको मैथुनकासक्तः श्वेतो वा यदि दृश्यते॥ उलूको वसते यत्र निपतेद्वा तथा गृहे। ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च" ॥ वराहसंहितायाम्। "क्रीड़ातुरङ्गो रतिमांसलुब्धो भीतो रुजार्त्तः पतितो विहङ्गः। भाखो गृहस्यस्य विनाशहेतुर्दोषः समुत्पाद्यत आतुरार्य्याः॥ गृहे पक्षिविकारेषु कुर्य्याद्वामरतर्पणम्। देवाः कपोता इति वा जप्यं समभिर्द्विजैः॥ गावस्य देया विविधा द्विजानां सकाञ्चना वस्त्रयुगोत्तरीयाः। एवंकृते पापमुपैति शान्तिं मृगैर्द्विजैर्वापि निवेदितं यत्" ॥ द्विजैः पक्षिभिः अपि नाऽन्यैरपि। भुजवलभीमे। "एकोहपक्षयोर्भावः समाख्या नवं दन्तिनः। सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातकाः" ॥ मत्स्यपुराणे। "अङ्गे दक्षिणभागे तु शस्तं विष्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥ लाञ्छनं पिटकं चैव ज्ञेयं विष्फुरितं तथा। विपर्य्ययेण विहितं सर्वं स्त्रीणां फलं तथा॥ अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन च तर्पणं स्यात्" सिंहप्रसूतिका गावः। शङ्खः। "दुःस्वप्नानिष्टदर्शनादौ घृतं हिरण्यञ्च दद्यादिति"। मात्स्ये। "नमस्ते सर्वलोकेश नमस्ते भृगुनन्दन। कवे सर्वार्थसिद्धार्थं गृहाणार्घ्यं नमोऽस्तु ते॥ एवं शुक्रोदये कुर्वन् यात्रादिषु च कारयेत्। सर्वान् कामानवाप्नोति विष्णुलोके महीयते॥ नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते। क्रूरग्रहैः पीड़ितानाममृताय नमो नमः॥ संक्रान्तावपि कौन्तेय यात्रास्वभ्युदयेषु च। कुर्वन् बृहस्पतेः पूजां सर्वान् कामान् समश्नुते" ॥ वैष्णवामृते व्यासः। "ग्रहयज्ञैः शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज। महाशान्तिकरः श्रीमांस्तुलस्या पूजितो हरिः॥ उत्पातान् दारुणान् पुंसां दुर्निमित्ताननेकशः। तुलस्या पूजितो भक्त्या

महाशान्तिकरो हरिः” ॥ अत्र ब्रह्मपुराणीयो मन्त्रः । “नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति” । छन्दोगपरिशिष्टम् । “अथातो रजस्वलाभिगमने गोऽश्वभार्य्यासु गमने यमजजनने विजातीयजनने वा काककङ्कगृध्रबककश्येनभासभिल्लकपोतानां गृहप्रवेशे महिषस्योपरि विश्रामणे एषामेव क्रियमाणे गृहद्वारारोहणे चाङ्गेषु कल्पदृष्टेन विधिनाऽग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति भद्रताय भव्यये स्वाहा सोमाय विष्णवे रुद्राय वायवे सूर्य्याय मृत्यवे विश्वेभ्यो देवेभ्यः स्वाहेति स्थालीपाकहुतान्यदिति” ॥ कपोतं विशेषयति शौनकः । “रक्तपादः कपोताख्यो धरण्योका: शुकच्छविः । स चेच्छालां विशेच्छाला समीपस्य व्रजेयदि ॥ अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु” ॥ कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीः भद्रं तद्दोषप्रशमनार्थाः समाज्याहुतीः । भद्रतायाम्नये स्वाहा इत्यादिमन्त्रैः तत्र स्थालीपाकेतिकर्त्तव्यतायां पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात् । छन्दोगपरिशिष्टम् । “पश्चात् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवर दत्त्वा शान्तिर्भवतीति गोवरं गोश्रेष्ठ दक्षिणां तां गां कृत्वा दोषशान्तिर्भवतीति” । तथाचोक्तम् । “गोर्विशिष्टतमा लोके देवेष्वपि निगद्यते । न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वरमुच्यते” ॥ छन्दोगपरिशिष्टम् । “यस्त्वेषामन्यतममापन्नः प्रायश्चित्तं न कुर्य्यात् तस्य गृहपतेर्मरणं सर्व्वस्वनाशो वा भवति तस्मात् प्रायश्चित्तं कर्त्तव्यं कर्म्मापवर्गे वामदेव्यगान शान्तिः शान्तिरिति” अपवर्गे समाप्तौ । वामदेव्यगानं शान्तिः कार्य्या आवृत्तिः प्रकरणसमाप्त्यर्था । वार्हस्पत्ये । “शमयन्त्या समाहाव् कन्यादिकृतं निमित्तमात्रेव । अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि” ॥ वराहः । “ये च न दोषं जनयन्त्युत्पातांस्तान्तृतुस्वभावकृतान्

त्रर्षिपुत्रकृतैः श्लोकैर्विद्यादेभिः समासोक्तैः"। तथा च मत्स्य-पुराणम्। "वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः। परिवेशरजोधूमरक्तार्कास्तमयोदयाः। द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः। गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे। तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम्। अनग्निज्वलनं स्फोटं धूमरेणुनिलाकुलम्। रक्तपद्मारुणा सन्ध्या नभःक्षुब्धार्णवोपमम्। सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्। शक्रायुधपरीवेशौ विद्युच्छुष्कविरोहणम्। कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः। नद्युदपानसरसां वृद्धर्ध्वा भवनप्लवाः। पतनञ्चाद्रिगेहानां वर्षासु न भयावहम्"॥ हरिवंशे वर्षावर्णनायाम्। "क्वचित् कन्दरहासाढ्यं शिलीन्ध्राभरणं क्वचित्" इति दर्शनात् वर्षासु शिलीन्ध्रोद्गमो न भयावहः। "दिव्यस्त्रीभूतगन्धर्वं विमानाद्भुतदर्शनम्। ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु। शस्यवृद्धिरसोत्पत्तिरपापाः शरदि स्मृताः॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्। रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी॥ दिशो धूमान्धकाराश्च सनभा वनपर्वताः। उच्चैः सूर्य्योदयास्तञ्च हेमन्ते शोभना मताः॥ हिमपातानिलोत्पातविरूपाद्भुतदर्शनम्। दृष्टाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्॥ चित्रागर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिणाम्। पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः। ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः॥ उन्मत्तानाञ्च या गाथाः शिशूनां चेष्टितञ्च यत्। स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः॥ पूर्वञ्चरति देवेषु पश्चाद्गच्छति मानुषान्। नादेषिता वाग्वदति सत्या ह्येषा सरस्वती"॥ बृहस्पतिः। "ज्योतिर्ज्ञानं तथोत्पात-

मविदित्वा तु ये नृपाम्। ग्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः" ॥ विनेया दण्डनीयाः।

अथ यात्रा। मत्स्यपुराणे। "ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुग्रहेषु च। प्रश्नकाले शुभे जाते परान् यायान्नराधिपः" ॥ ऋक्षेषु षट्सु नाड़ीनक्षत्रेषु। दुर्गंहवतान्तु "अर्थो ह्यनर्थतां याति दुर्भगाणां यथा विभो। विषमे तत्ससुद्भूतममृतामृतकाङ्क्षया"॥ पश्चात् समुद्रमथनात्। भागुरिः। "दिगीशं हृदये ध्यात्वा गन्तव्याशामुखः स्थितः। अन्तःसमीरणे देहप्रवेशे समुपस्थिते। स्वस्तीति दक्षिणं पादमासनादवतारयेत्"। राजमार्त्तण्डे। "प्रजिदिगीशं हृदये निधाय यथेन्द्रमैन्द्रामपराश्च तद्वत्। सुगन्धमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ। स्नातः सिताम्बरधरः सुमनाः सुवेशः संपूजितोऽमरगुरुद्विजगोदिगीशः। कृत्वा प्रदक्षिणमिह शिखिनं कृताशीर्गच्छेन्नरः शकुनसूचितकार्य्यसिद्धिः" विष्णुपुराणम्। "माङ्गल्यपुष्परत्नाद्यैः पूज्यानन्भिवाद्य च। न निष्क्रमेत् गृहात् प्राज्ञः सदाचारपरो नरः ॥ गृहाद् गृहान्तरं गर्गः सीम्नः सीमान्तरं भृगुः। शरक्षेपाद्भरद्वाजो वशिष्ठो नगराद्बहिः" ॥ यात्रानन्तरं वराहः। "संत्यजेद्भोजनागारं तथा शयनमन्दिरम्। दूरस्थं जलमध्यस्थं यथानं व्याधिपीड़ितम् ॥ गच्छन्तमपि यानस्थं ब्राह्मणं नाभिवादयेत्" ॥ हृष्टतुयात्रायां राजमार्त्तण्डे "प्राच्यामहानि सुनयः प्रवदन्ति सप्त याम्यामतीव शुभदानि दिनानि पञ्च। त्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसत्रयमुत्तरस्याम् ॥ एतच्चायुक्तमित्याहुर्दीर्घाशास्त्रविदो बुधाः। यात्रां क्षिपञ्चसप्ताह पुनर्भद्रेण योजयेत् ॥ वाञ्छितार्थफलावाप्तौ यात्रापरिसमाप्यते। जन्मर्क्षे चाष्टमे चन्द्रे वारे भौमशनैश्चरे ॥ प्रस्थितेऽपि न गन्तव्यमत्यन्तगर्हिते दिने। जन्मभे जन्ममासे वा योग-

च्छेदष्टमे विधौ॥ आयुःक्षयमवाप्नोति व्याधिञ्च वधबन्धने"॥ विष्णुपुराणम्। "वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च। शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्॥ नोर्द्धं न तिर्य्यग्-दूरं वा निरीक्षन् पर्य्यटेत् बुधः। युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन्॥ चतुष्पथान्नमस्कुर्य्यात् चैत्य वृक्ष तथैव च। प्रश्ने मनोरमाभूमाङ्गल्यद्रव्यदर्शनश्रवणे॥ यदि वादरेण पृच्छति दैवज्ञं निर्दिशेद्विजयम्"॥ यात्राप्रश्नविधिः। "हस्त-चरणतलौष्ठाङ्गुष्ठहस्तोरुमाङ्गल्यवदन-नासा गुह्यरन्ध्राणि भूपः। स्पृशति यदि वाराप्रेमण्कव्यञ्जकं वा द्युतिगतिशुभ-शब्दान् व्याहरन् नास्ति यत्नम्"॥ प्रश्ने स्वर्गादिभिर्जयज्ञानम्। व्यासः। "चिरप्रवाससूत्रायां दृष्टे वर्षस्य वेधने। चूड़ाकृतौ प्रतिष्ठायां भानुशुद्धिर्विधीयते॥ आरोग्यस्तवेण धनं नपीन कार्य्यस्य सिद्धिं तिथिनाप्नुयाच। राघ्गुहमे चाध्वनिसिद्धिमाहुः प्रायः शुभानि चपदाकरेण"॥ सवत्सरप्रदीपे। "सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे। यात्रोद्वाहव्रहारम्भचौर-कर्म्माणि वर्जयेत्"॥ एष यात्राप्रतिषेधो राजेतरपरः। "मार्ग-शीर्षे शुभे मासि यायाद्यात्रां महीपतिः। फाल्गुनं वाथ चैत्रं वा मास प्रति यथाबलम्"॥ इति मनुवचनात्। "श्रावणे भाद्रमासे युवतिमृगगते चार्थलाभः प्रदिष्टो मासे पौषे॥ यात्रा भवति नरपतेरर्थसिद्धिप्रदात्री"इति राजमार्त्तण्डाच। "शुक्लाद्या स्याच्छुभे चन्द्रे कुजार्कसुरुराशिगे। सत्पक्षे शुभदा यात्रा कृष्णपक्षे ततोऽन्यथा"॥ यात्रायां पक्षशुद्धिः। "षष्ठ्यष्टमी द्वादशीषु न गच्छेत् विदिनस्पृशि। पूर्णिमाप्रतिपद्दर्शरिक्ताव-मदिनेषु च॥ तथा यामद्वितीयायां यात्रायां मरणं भवेत्। अजातचन्द्रा प्रतिपत्तिथिर्या सा सर्वदा सिद्धिकरी न पुंसाम्॥ कलौ न चन्द्रा प्रतिपत्तिथिर्या सा सर्वदा सिद्धिकरी नियुक्ता।

प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः। द्वितीयायां शुभः पन्थास्तृतीयायां जयो भवेत्॥ वधबन्धनसंक्लेशश्चतुर्थ्यां नात्र संशयः। पञ्चम्यामीप्सितार्थः स्यात् षष्ठ्यां व्याधियुतो भवेत्॥ सप्तम्यामर्थलाभः स्यादष्टम्यामस्त्रपीड़नम्। नवम्यां मृत्युसंयोगान्न गन्तव्यं कदाचन॥ दशम्यां भूमिलाभः स्यादेकादश्यामरोगिता। द्वादश्याञ्च न गन्तव्यं सर्वसिद्धा त्रयोदशी॥ चतुर्दश्यां पञ्चदश्यां गमनञ्च निषेधयेत्। संत्यजेद्दिवसे यात्रां सूर्य्यावार्केन्दुवक्रिणाम्॥ अष्टवर्गदशापाकेष्वनिष्टफलदस्य च। सूर्य्यदिनेऽध्वनि नाशयन्ते शक्तिचयोऽर्थहानिश्च। ज्वलनात्वक्पित्तरुजः कौजे बुधे सुहृत्प्राप्तिः। जैवे धनजयलब्धिः शौक्रे स्त्रीवस्त्रगन्धधनलाभान्॥ दैन्यवधबन्धरोगान् प्राप्नोति दिनेऽर्कपुत्रस्य। उपचयग्रहदिने सिद्धिः क्रूरेऽपि यायिन्यां भवति॥ सौम्येऽप्यनुपचयस्थे न भवति यात्रा शुभा यातुः। शुक्रादित्यदिने न वारुणदिशं न क्षे कुजे चोत्तरां मन्देन्द्वोश्च दिने न शक्रककुभं याम्यां गुरौ न व्रजेत्॥ सूनानीति विलङ्घ्य यान्ति मनुजा ये सौख्यवित्ताशया भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि। दिग्गीशांहे शुभा यात्रा पृष्ठांहे मरणं ध्रुवम्"॥ गर्गोऽपि। "दिग्गीशवारे गमनं प्रशस्तं विहाय सौम्यं यदि जीविताशया॥ न वारदोषाः प्रभवन्ति रात्रौ विशेषतोऽर्कावनिभूसूनोनाम्। गुणयति तिथौ ह्येऽनिष्टे दिवागमनं हितम्। निशि च सगुणैः शस्तं यानं तिथिगुणवर्जिते"॥ अतिथिगुणवर्जिते। "अतिथि कथितान् दोषान् प्राप्नोत्यतः प्रतिलोमगः॥ गुणमपि तयोर्यथात् सम्यग्जगाद भृगुमुनिः। याम्यायने निशायात्रा शुभा स्यादुत्तरे दिवा॥ चन्द्रसूर्य्यौ मृगादिस्थौ पूर्वां यायात्तथोत्तराम्। दक्षिणां पश्चिमामाशां कर्क्यादौ तौ स्थितौ यदा॥ अन्यथा वधबन्धा-

दिक्शूलमालोक्य संशयम्" ॥ योगिनी तु । "प्रतिपन्नवमी पूर्वे रामारुद्राश्च पावके । शरचयोदशी याम्ये वेदामासाश्च नैर्ऋते ॥ षष्ठी चतुर्दशी पश्चात् वायव्यां मुनिपूर्णिमे । द्वितीया दशमी यचे ऐशान्यामष्टमी कुहूः ॥ योगिनी नवदण्डास्तु शेषा वर्ज्या विशेषतः । दक्षसंमुखयोगिन्यां गमनं नैव कारयेत् । वामे शुभकरी देवी पृष्ठे सर्वार्थसाधनी" ॥ राहुभ्रमणचक्रम् । "पश्चादर्के विधौ वह्नौ सौम्यां क्षे वायवे कुजे । रक्षो दिशि भृगौ याम्यां गुरावीशे शनौ दिने ॥ राहुर्भ्रमति याम्यादिदश्वगत्या च वामतः । प्रतीच्यां वह्निकोणे तु ततः सौम्यामतो रुपे ॥ ततो प्राच्यामतो वायौ तस्माद् याम्यां ततः शिवे । रवावेवमन्यवारेपूह्यमेव क्रमेण हि ॥ द्यूते युद्धे विवादे च यात्रायां समुखस्थितम् । राहुं विवर्जयेत् यत्नाद् यदीच्छेत् कर्मणः फलम्" ॥ राहुसांमुख्यनिषेधः । "अश्विहस्तगुरुमैत्रदैवतैः पौष्णविष्णुवसुश्रोतरश्मिभिः । यानमेभिरतिसुन्दरं विदुः सर्व एव मुनयस्तु नेतरैः ॥ चित्रार्द्रास्वातिविशाखा भरणी शिवेरशक्तिकाः । नातिशुभदा प्रयाणे शेषाणि शुभाशुभानि धिष्ण्यानि ॥ दश शक्रपुर सदग्निभसुदेत्यर्को न चेदुत्तरे रोहिण्याश्च विशाखभे च न गमः पूर्वाह्णकाले शुभः । मध्याह्ने न शिवाहिमूलवलभिज्ज्येष्वह्निशेषेऽश्विनीहस्तापुष्यमृतत्सुचित्रशशिमैत्राख्ये न रात्रादितः । रात्रेर्मध्यमसत्तु पूर्वसरणी पित्र्येषु शेषे निशो इर्यादिचितयादितिष्वपि जल मध्याह्नरात्रन्त्ययोः । पुष्याहस्तमृगाच्युतेषु शुभदाः सर्वेऽपि कालास्तथा सार्वदारिकसञ्ज्ञितानि गुरुभ हस्ताश्विमैत्राणि च । पूर्वार्द्याम्निमघानुराधवसुभादोन्यत्र दण्डोऽन्तरे वायव्योर्न स लङ्घ ऐकमनक्षप्राच्योस्तथान्याविदिक् । लग्ने दिग्वदनेऽतिदण्डगमनं प्राच्यादि शूलं विना

तत्नोप्तागलपदं सरोजनिलयः स्यादुत्तराफल्गुनी"। प्रतिदण्ड-गमनं दण्डमुल्लङ्घ्य गमनम्। "दिशोरष्टमभागश्च विदिक्कोणश्च कथ्यते। मेषाद्यास्त्रिभ्रमाज्ज्ञेयाः प्रागादि दिक्षु ताः ग्रहाः। शीर्षोदये समभिवाञ्छितकार्यसिद्धिः पृष्ठोदये विफलता चलचित्तता च। यातव्यदिङ्मुखगतस्य सुखेन सिद्धिर्वैलम्भमो भवति दिक्प्रतिलोमलग्ने। केचिदाहुर्न यायात्तु तुल्यां प्राच्यां तु दक्षिणे। प्रतीच्यां पश्चिमे युग्मे नोदीच्यां हस्तभे न तु। गुरुहस्ताश्विमैत्रासु सर्वदिक्षु शुभं श्रुतिः। अतो दिग्भेददोषोऽत्र वराहादेरसम्मतः"। नैर्ऋताग्निविशा-खयाय्वह्निमघायाम्यैः परार्द्धं न सन्निवाद्यान्तकजं परप्रथमजं पिवामिति चाखिले। राहुक्रूरयुगस्तसन्निधितयोत्पातप्रदुष्टे ग्रहैर्दग्धैर्युभमसहिते तिथि तिथाहसेऽप्यनिष्टे गमः। "अष्टे ग्रहाद्यैः संयुतेऽस्ताः प्रकोपो वक्रीभङ्गो राहुणार्केन योगः। केतूल्कानां पीडिते देवनाथः क्रोधी भौमे सोपग्रहस्य भाजे च। उपग्रहाख्य ऋक्षेषु वर्जयेद्गमनं नृपः। उपग्रहगतस्तोयजन्मर्क्षे न भवेत् क्वचित्"। उपग्रहाश्च सर्वतो भद्रचक्रे प्रागुक्ताः। "पूर्वोक्तजन्मकर्मादि नाडीनक्षत्रदोषवान्। याता मभृवयं याति विग्रहो मवुनामकम्। यात्रायां शोभनास्ताराः समाः कर्मान्त्यमर्मयुताः। यात्राभङ्गविधावस्तत्र भवेत् सोऽर्काविकोणे विधौ। भौमाद्वादिषु वा बलिन्यथ सुते गन्तव्य-दिक्पालतः"। सुते इत्यत्र शुभे इत्यपपाठः। "यात्रादिनेऽष्टमाद्-यदि पञ्चमोऽन्यो ग्रहे ग्रहो वीर्ययुतोऽवतिष्ठेत्। यात्रोद्यतस्तत्र न याति याता तयोर्वशोयाऽपयाति स काष्ठाम्" इत्यनेन विरोधात्। "सर्वं शुभफलं नश्येद् यात्राभङ्गे गतस्य च। व्यसनं प्राप्नोति महद्यातोपात्तविनिर्गतोऽथवा मृत्युम्। वेष्टितिगमने-ऽप्येवं तत्रहस्तर्क्षेऽप्युपदिशन्त्येके"। व्यसनान्याह मनुः। "काम-

जेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु। मृगयाक्षो दिवास्वप्नः परीवादस्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक.”। तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रिणीति दश। पैशुन्यमविज्ञातपरदोषाविष्करणम्। साहसं साधोर्बन्धनादिना निग्रहः। द्रोहो जिघांसा। ईर्षा अन्यगुणासहिष्णुता। असूया परगुणेषु दोषाविष्करणम्। अर्थदूषणम् अर्थानामपहरणं देयानामदानञ्च। भौमपराक्रमे। “न विष्कुम्भो न वा गण्डो न व्यतीपातवैधृतौ। चन्द्रतारा बले प्राप्ते दोषागच्छन्त्यसंमुखाः। गरवणिजविष्टिविवर्जितानि करणानि यातुरिष्टानि। गरमपि कैश्चिद्विदितं वणिजस्तु वणिक्क्रियास्वेव। पूर्वाह्णे तूत्तरां गच्छेत् मध्याह्ने पूर्वतो व्रजेत्। अपराह्णे व्रजेत् याम्यां अर्द्धरात्रे च पश्चिमाम्। मवन्यङ्गारकौ विष्टिः शनैश्चरदिन तथा। व्यतीपातो न दुष्येत्त यस्यार्को दक्षिणे स्थितः। राशौ राशौ द्वादशेन्दोरवस्थाः प्रोक्ताः कैश्चित् सूरिभिः प्रोषिताद्याः। यात्रोद्वाहाद्येषु कार्य्येषु नून सन्नातुल्यं तत्फलं चिन्तनीयम्। प्रवासनष्टाख्य मृताख्यजयाख्यहास्यारतिक्रीडितसुप्तभुक्ताः। ज्वराख्यया कम्पितसुस्थिते द्विषट्कसंख्या हिमगोरवस्थाः”। चन्द्रस्य द्वादशावस्थागणनमाह “वत्रात्रादिभुक्तोडुघटासमूहाद्देदा ४ हताद्वाण ममष्ट ४५। भुक्तात् सत्याकर्शेषे शशिनः क्रियाद्या भवन्त्यवस्था गतगम्यरूपाः। सदादाः शूलमृहस्ता एकावस्था भवेत्ततः। ज्ञानमक्लौनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति। मनमृताकपगुणान्वितापि प्रभ्रष्टयोषा वनितेव पुंसः। मोने कर्किन्यलिनि च इषे अप्रकाशस्यपापे वामे वा दिग्दुर्जिस-

बलिनां जन्मलग्नाष्टमे वा। वर्गे पापानुपचयकर्तां वर्ज्जिणां पृष्ठलग्ने पापान्त:स्थे न शुभमबल जन्मलग्नानधीने"। वामे विपरीते। "घटमिथुनकुलीराधापमी मीनकन्या: खलु शुभभवनत्वाद्राशय: सप्त सौम्या:। अलिधटमृगसिंहाजास्तु पापाश्रयत्वाम्मुनिभिरभिहितास्ते प्रायश: क्रूरभावा:"। अन्यत्र। "लग्ने कार्मुकमेषतौलिमिथुने कार्य्यं विलग्ने नृणां पञ्चास्ये मकरे तथा ग्रनिरटइे तद्वत्फलं वृश्चिके। सिंहे वा यदि गोधटेषु गमनं सर्वार्थसिद्धिप्रदं स्यादाशापतिषु प्रयाति सकलं कन्याझषे मन्मथे"। तथा। "नेष्ट दिशन्ति सकराणि कुलीरलग्ने मेषे धटे धनुषि दीर्घकरी हि यात्रा। युग्माङ्गना झषवृषे भ्रवमर्थलाभो ज्योतिर्विदां सकलसिद्धिमुपैति लक्ष्मी:"। यात्रायां सामान्यलग्नविवेक: "मौने च कुटिलो मार्गो भवति तदंशेऽन्यराशिलग्नेऽपि। मीयानमाप्यलग्ने कार्य्यं तेषां नवांशे वा"। दिगादि बलिनो यथा। "ऐन्द्रां मानुषराशयस्तु पशवो याम्यं सजौर्थ्या बलिनोऽम्बुगा बलयुक् तथैव बलिन: पानीयजयोत्तरे। सर्वे मानुषराशयो दिनबलाराझौ स वीर्य्याश्चतुष्पादा. ग्रीवगणास्तथैव बलिन: सन्ध्याद्वये कीर्त्तिता:। स्वराशिलग्नाष्टमलग्नयोच क्षयवृभाच्छ्युरशोदये वा। तद्राशिगैर्वा गमनं विलग्ने तुल्यं नराणां विपमक्षयेन। उपचयकरस्य वर्ग: क्रूरस्यापि प्रशस्यते लग्ने। चन्द्रे वाप्युक्तेम तु विपरीतस्य सौम्यस्य। यानं भं जन्मराशेरुपचयमुदयारिविलाभश्च येशिर्मिंवं वर्ग स्वजन्मस्वनुश्चटयोर्यद्यपदेर्नीनिरशम्। स्थान सौम्यस्य जन्मन्यभिमतफलदस्यापि यत्र प्रयाय यास्यां त्यक्ताभिजिह्न शुभफलदग्रहोस्दोय या काल्होरा स्वाधिपतेर्दिशि राशि: प्रव इति यवनै: सदा कथितम्। तत् प्रयगो विनिहन्यादपिरेव महीपति: शत्रून् सर्वदारः सर्वार्थसाधक: सर्व-

कर्मसु तथेष्टः। सर्वेषां वर्णानामभिजित्संज्ञको मुहूर्त्तः स्यात्। अष्टमो दिवसार्द्धे त्वभिजित्संज्ञकः क्षणः। स ब्राह्मणो वराश्चित्यं सर्वकामफलप्रदः। चक्रमादाय गोविन्दः सर्वान्दोषान्निकृन्तति। अभिजित्र बुधे शस्तं याम्यान्तु गमने तथा। अन्यदिग्गमने शस्तं सर्वसिद्धिप्रदायकम्। वारप्रवृत्ते घटिका द्विनिघ्नाः कालाख्यहोरा पतयः परासाः। दिने निशायां स्मृतुवाणहस्ता निजाहनाथां पतयः प्रकल्प्याः। रेखा पूर्वापरयोर्वारः सूर्योदयात् परस्तात् प्राक्। देशान्तरयोजनमितविघटीभिः पादहीनाभिः। द्वादशाङ्गुलिकाच्छङ्कोः समराशिदिनार्द्धके। छायापादानुसारेण रेखा स्वदेशयोजनम्। सुमेर्वादिस्तु लङ्कान्ता भूमिरेखाऽस्ति तत्रतः। रोहितकमवन्ती च तथा सन्निहितं सरः। रेखादेशे साङ्गुभातामपास्य स्वदेशजाम्। कृत्वा पञ्चा योजनानि स्वदेशान्तराणि वै। तत्काले तु नवद्वीपे दिग्वाङ्गुलपराङ्गनाः। तच्छोधनाद्भवत्यत्र सविंशच्छतयोजनम्। तत्पादहीनतो दण्डाद्दसुविंशत्पलाधिका। वारप्रवर्त्तनं तस्मात् कालहोराविवेचनम्। दिनाधिपाद्यानिजषष्ठषष्ठाः सूर्य्यास्फुजिज्ज्ञेन्दुशनीज्यभौमाः॥" कर्मान्तरे तु वारमहर्निशदयावधिरेव तथा च सूर्य्यसिद्धान्तः। "लङ्कादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता। उदयादौदय भानोर्भूमिसावनवासराः॥" भौमेति पितृदेवदिनव्याहृत्त्रयम्। अत्र दिनाधिपस्य रव्यादेर्भोग्यं दिनं वारस्य सावनगणनांशं लोकव्यवहारोऽपि तथेति। "तिर्य्यगधः स्फूर्ध्ववदना होराः स्युः सूर्य्ययोगतः क्रमशः। वाञ्छितफलदोर्द्धमुखी हे प्रिये चारम्भे यातुः"॥ यात्रायां होराफलम्। "मदपहस्य च द्रेकाणे रसमाण्डान्वितेऽपि वा। फलपुष्पयुतं यायाच्छुभ-

शुक्रे चलत्वं ध्रुवम्। मन्दं मन्दगतेर्गतागतविधौ ज्ञेया सदा पण्डितैरात्रौ पञ्चभिरह्नि षड्भिरुदिता यात्रार्द्धयामात्मिका"॥ दैवज्ञमनोहरे। "वृषादौ चन्द्रमा ज्ञेयो मेषादौ लग्नमेव हि। परियोज्य समं मित्या त्रिभिर्भागं हरेत्ततः॥ शून्ये मृत्युर्द्वये हानिरेकाङ्के विजयो भवेत्"॥ इत्येकाङ्कौ। भीमपराक्रमे। "दिनं तिथिं वारयुक्तं स्वनक्षत्राङ्कयोजितम्। सप्तभिश्च हरेद्भागं शेषे यात्रां विनिर्दिशेत्॥ प्रथमे शोभना यात्रा द्वितीये लाभकृद्भवेत्। तृतीये वित्तलाभः स्याच्चतुर्थे सिद्धिरुत्तमा॥ पञ्चमे मार्गविघ्नः स्यात् षष्ठे निधनमेव च। उक्तं प्रत्ययमुनिना शून्ये श्रीः सर्वतसुखी॥ पतिर्बलिनोन्दो सुखरी गमनं यत्नाद्विवर्जयेल्लग्नात्। सप्ताष्टश्च न यायाद्विविधोत्पातेष्वनिष्टेषु"॥ वराहः। "देहः कोपो योऽधो वाक् मन्वः शत्रुर्मार्गोऽथायुः। कर्मप्राप्तिर्मन्त्री यात्रालग्नाद्भावाश्चिन्त्याः॥ धिलाभवर्जं रविसौरिभौमा निघ्नन्ति नो कर्माणि सूर्यभौमौ। पुष्णन्ति सौम्याः परिहाय षष्ठमस्तं भृगुस्त्यविलग्नमिन्दुः॥ केन्द्रकोणार्थगो नेष्टः जीवः पूर्णः शुभः शशी। सदैवत्रायगः शस्तो न शस्तोऽन्यारिरन्ध्रगः॥ आदित्येन्दुमहीजराहुरविजैः संप्रस्थितो लग्नगैः क्षुत्तृष्णा विषमव्यथामदभवेद्रोगांश्च नानाविधान्। जीवः सोमसुतस्तथैव भृगुजो यात्रोदयस्थो यदा सा यात्रा धनभोगपुत्रसुखदा पुण्यैः सतैर्लभ्यते। कोपस्थाने नराणामसुरगुरुबुधे धर्मकामार्थलाभो वस्त्रोत्पत्तिश्च जीवे हृदि सुखमतुलं शत्रुपक्षक्षयश्च। पङ्गुबन्धं सुदीर्घं क्षितिसुतसहितः कोपहानिश्च भानुचन्द्रः कुर्यात् प्रयाणे प्रियजनसहितं राहुरत्यातसुखम्" ॥ २ ॥ "प्रस्थाने भूमिपस्य क्षितिसुतरविजौ भानुना संप्रयुक्तौ शुक्रचन्द्रात्मजौ वा सुरगुरुरथवा। शीतरश्मिर्यदा वा। भ्रातृस्थाने स्थिताः

स्पुर्नरपतिगमने सर्वकामार्थसिद्धिं जित्वा शत्रूनशेषान् परिचरति रणे गोकुले पुङ्गवाः" ॥ ३ ॥ "वन्सुस्थानगतो ददाति विपुलं भोगं गुरुर्भार्गवः शत्रूणां चयमीहते नरपतेः सौख्यं तथा चन्द्रजः। हानिं कोपगतां करोति रविजः खेदद्वयं चन्द्रमा राहुर्भूमिसुतस्तथोष्णकिरणः कुर्वन्ति दुःखं महत्"॥४॥ "जीवः पुत्रार्थलाभं जनयति भृगुजः सम्पदं स्थानलाभं प्रीतिं चैवोपपत्तिं कुमुदवनसुहृत् सूनुरर्थं प्रदत्ते। सूर्यचन्द्रोऽथ भौमो दिनकरतनयः सिंहिकासूनुयुक्तः। सर्वे ते पञ्चमस्थाः सुसुतभयकराः पार्थिवानां भवन्ति" ॥ ५ ॥ "षष्ठस्थाने स्थितार्केहिनकरतनयो भूमिपुत्रस्तथार्कः शीतांशुर्दैत्यमन्त्री रजनिकरसुतः सैंहिकेयोऽथ जीवः। कुर्वन्त्येतेऽर्थलाभं यदपि हृदि गतं सिध्यते तच्च कार्य्यं यत्रैषा पार्थिवानां परबलमथनो सर्वकामार्थदात्री" ॥ ६ ॥ "नेष्टाः शुक्रदिवाकरार्कतनयाः राहुस्तथा भूमिजः क्षिप्रं शत्रुवशं नयन्ति पुरुषं स्थाने स्थिताः सप्तमे। सौम्यो मित्रसमागमं सुरगुरुः कार्य्यार्थसिद्धिं नृपाम्। चन्द्रः श्रेष्ठफलं ददाति नियतं यात्रोद्गमे भूभुजाम्" ॥ ७ ॥ "सूर्यो मृत्युं विधत्ते हिमरुचिरथवा शोकदुःखं प्रदत्ते भौमो रोगञ्च धर्म्मं रजनिकरसुतो भव्यदः क्लेशदश्च। मृत्युं जीवोऽष्टमस्थः खलु दनुजगुरुः सूर्यपुत्रश्च कुर्य्यादग्ने शस्त्राद्विवादात् वधमिह नियतं शस्त्रघातञ्च राहुः" ॥ ८ ॥ "शुक्रोऽतिसौख्यं नवमो बुधस्तु जीवोऽपि संस्थापयति प्रयातम्। चन्द्रार्कसौराः सह भूमिजेन कुर्वन्ति रोगान् सुबहून्नराणाम्" ॥ ९ ॥ "कर्मस्थाने स्थितोऽर्कः प्रचुरधनकरः पुष्टिदः शीतरश्मिर्जीवः संग्रामकाले भवति विजयदः सौम्यशुक्रौ तथार्थम्। नित्यं यात्रोद्यतानां भवति विजयदः सर्वकार्य्येषु भौमो राहुर्वैकल्यदुःखं जनयति सरुजं दीर्घयात्रिलमार्किः" ॥ १० ॥ "भृगुसुतबुधजीवैश्चन्द्रसूर्य्या-

ग्रहविलोकिते॥ रत्नभाण्डान्वितो ज्ञेयो धनुर्मध्यतुलादिमो। द्रेक्काणः कर्कटाद्यश्च फलपुष्पयुतः स्मृतः॥ नवभागे च तिग्मांशोर्वादननाशो विलग्नसंप्राप्ते। क्रव्यात् खगरङ्गमनं प्रभावमृदुता चन्द्रांशे॥ कौजेऽग्निभयं बौधे मित्रप्राप्तिर्धनागमो जैवे। भोगविवृद्धिश्च शौक्रे भृत्यविनाशो रविसुतांशे॥ यत् प्रोक्तं राश्युदये द्वादशभागेऽपि तत् फलं वाच्यम्"॥ यच्च नवांशकविहिते तत्त्रिंशांशोदयेऽपि स्यात्। "पापः चौथो विधुरविदिनं यस्य जन्मर्क्षपीडा होरा जन्माष्टमगृहपतिर्जन्मभं प्रत्यनिष्टः। नीचस्थास्तं गतपरजिता लग्नजन्मेशशत्रुर्लग्ने नेष्टाः खचरखचितं वक्रियुक्तञ्च केन्द्रम्"॥ यात्रायां लग्नस्थग्रहनिर्णयः। शून्यकेन्द्रवक्रियुक्तकेन्द्रनिषेधश्च। होरालग्नम्। तथा च होराराश्युदेलग्नयोः। विशाखानलतोयानि वैश्वार्थं भगदैवतम्। पुष्यः पौष्णं यमः सर्पो जन्मर्चाण्यङ्कतः क्रमात्"॥ श्रस्तं गतादित्यमाह। "दिवसकरेणास्तमयः समागमश्च शीतरश्मिसहितानां कुसुतादीनां युद्धं मिथस्तेऽन्योऽन्ययुक्तानाम्। रश्मिर्लोहितः श्यामः पुरुषः सूक्ष्मतारकः। अपसव्यकृतो यश्च दक्षिणस्थः पराजितः। उदग्मार्गगतिः स्निग्धो विमलो विमलप्रभः॥ बृहद्रूपोऽतिशक्तश्च विजयो कथितो ग्रहः। विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः सर्वे जयिन उदक्संस्था दक्षिणदिक्स्थो जयी शुक्रः। ग्रहस्य यो यस्य हतस्य वश्याः पीडां समृच्छन्ति॥ एव तस्य। संग्रामयोर्ग्रम्य जयी समुद्रा जयन्ति सर्वत्र मतं मुनीनाम्। क्रूरोऽप्यनुकूलस्थः शस्तोलग्नेऽशुभोऽपि नानिष्टः। केन्द्रत्रिकोणेषु शुभाः प्रशस्तास्त्रिषेव पापा न शुभप्रदाः स्युः। पापोऽपि कामं बलवान्नियोज्यः केन्द्रेषु शून्येषु शिवा न यात्रा। स्थानेऽर्कः स्वस्य सुखोदयमुपगतः शस्त इन्दुः सकोये भौमः सौरे बुधा

ऽरथ शनिसितान्त्यस्थ जीवोऽथ शुक्रः। सौम्यः स्वस्थानसंस्थः शनिरपि तरणे रचकाजन्मकाले॥ तासः स्यात् कारको वा सुहृदपि शुभकृल्लग्नजन्मेशयोर्यः"॥ "यात्रायां लग्नस्थग्रहाप-वादः। ताज्ञानाद्य। "जन्मसमये शशाङ्काद्ये ह्युपचय-स्थिताः ग्रहाः केचित्। ते सर्वे ताजकाख्याः क्रूराः सौम्याश्च संचिन्त्याः॥ कालाटिनि दिगधीशे दिग्बलिनि विहगे ललाटगे वापि। प्रतिभृगुजे प्रतिशशिजे कालाशुक्रे संत्यजेद् यात्राम्॥ यात्राहैलग्नं पूर्वस्यां तत्क्रमेण च खेचरान्। न्यस्य यात्राहं-दिक्स्थित्या पुरः खेटान् विलोकयेत्"॥ एतत् स्पष्टं क्रमेण यथा। "लग्नेऽर्के व्ययलाभयोर्भृगुसुते कर्मस्थिते भूमिजे रात्रौ धर्मविनाशयो रविसुते द्यूनेऽरिमूर्त्योर्विधौ। चन्द्रे ज्ञे सहजार्थयोः सुरगुरोरेवं ललाटोऽन्वये योगे दिक्पतिभिः कृते चयभुजः प्रागादिकाष्ठां गताः। लग्ने सौम्यगुरुप्राच्यां याम्यां खे कुजभास्करौ॥ पश्चिमेऽस्ते तथा सौरिं सौम्यां बन्धौ विधुं सितम्। एवं दिग्बलिनो याने त्यजेद् यत्नाल्ललाटगान्॥ लग्ने व्ययाये दशमेऽष्टधर्मे द्यूनेऽरि स्वस्वोर्हिबुके विविक्ते। प्रतीपगा येषु सितेन्दुपुत्रौ प्राच्यादिकाष्ठासु न यातु रिष्टौ॥ नीचगे ग्रहजिते प्रतिलोमे भार्गवे कलुषितेऽस्तगे वा। प्रस्थितो नरपतिः प्रबलो वा क्षिप्रमेव वशमेति रिपूणाम्॥ एवंविधेऽपि शुक्रे यायाद् यदि चन्द्रकोऽनुकूलस्तः। प्रतिबुधयातस्य न परित्राणे ग्रहाः शस्ताः"॥ राजमार्त्तण्डे। "सौम्यां लग्नगते बुधे शिवदिशं वाचस्पतावष्टमे प्राचीं तीक्ष्णकरे कुजे च दशमे याम्यां प्रयातो नरः। आग्नेयीं भृगुजे च शीतकिरणे बन्धु-स्थिते वायवीं मन्दे सप्तमगे पश्चिमदिशं याति द्विषो वश्यताम्। नाशीचद्यूतकोशवर्दिवसाय यियासतां शुभदाः। उद्वेगस्तपने सुखं शशधरे रोगो महीनन्दने लाभश्चन्द्रसुते गुरौ च कथितः

किंभौमैर्व्रजति यदि नरेन्द्रः चिप्रमेकादशस्थैः । स जयति रिपुदर्पं स्वेच्छया वैरिशङ्को विचरति रहमध्ये सिंहपोतो यथैकः” ॥ ११ ॥ “रविसुतरुधिराकौ वुद्धिमोहं नराणां विदधति कुमुदेष्टः खेषु भेदेषु भेदम् । स जयति रिपुदर्पं भृत्यहीनोऽप्यवश्यं यदि बुधगुरुशुक्रा द्वादशस्था भवन्ति” ॥ १२ ॥ “तिथ्यादिषु निषिद्धेषु चन्द्रतारादिलोमतः । उषां गोधूलियोगं वा स्वीकृत्य गमनं भवेत् ॥ प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृपः । दक्षिणे चाभिजिञ्चैवमुत्तरे च निशां तथा” ॥ व्यासः । “लग्नशुद्धिर्यदा नास्ति ग्रासकालोऽतिवर्त्तते । अविशेषेण वर्णानां तदा गोधूलिरिष्यते ॥ आरक्तमन्धं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः । आहुः प्रयातेः सकलार्थसिद्धिं संलचते हस्ततलस्थितेव ॥ सन्ध्यातपात्ययितपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । स्वद्दे गवां खुरपुटोद्गलितैरजोभिर्गोधूलिरेष कथितो भृगुणैव योगः” ॥ सूर्य्यसिद्धान्ते । “अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् । तेजः परिहानिरुषा भानोरर्द्धोदयं यावत्” ॥ एतद्वचनैकवाक्यतया सन्ध्योषयोः सन्ध्यागोधूल्योरैक्यम् । अतएवोक्तं “सन्ध्यामुहूर्त्तमाख्यातं क्षामहद्दो समा स्मृता । लाभगवृमहजेषु यमारौ सौम्यशुक्रगुरवो वसयुक्ताः ॥ गच्छतो यदि ततोऽस्य धरित्री सागराम्बुवसना वशमेति” ॥ धरित्रीयोगः । “केन्द्रोपगतेन गुरुणा वोधिते व्ययायचतुर्थगे सिते । पापैरनवाष्टसप्तमगैर्मुक्तिं न यदाप्नुयाद्धतः” ॥ किवसयोगः । “शशिनि चतुर्थाष्टह समुपेते बुधमहितेऽस्तगते भृगुपुत्रे । गमनमवाप्य यतिर्मनुजानां जयति रिपून् समरेण विनेश” ॥ विनाससरयोगः । “सितेन्दुजौ चतुर्थगौ निशाकरय सप्तमे । यदा तदा गतो नृपः पराम्स्यरीन् विना

यणात्" ॥ चिनारथयोग: । "एकान्तरर्क्षे भृगुजात् कुजाद्वा
सौम्यो स्थिते सूर्य्यसुताद्गुरोर्वा । प्रध्वस्तवैरिर्न चिरात्ततस्य
वैराधिको भृत्य इवेश्वरस्य" ॥ अरिप्रध्वंसयोग: । "गुरुरुदये
रिपुराशिगतोऽर्को यदि निधनेन च शीतमयूख: । भवति
गतोऽत्र शशीव नरेन्द्रो रिपुवनितानन्तामरसानाम्" ॥ शशि-
नरेन्द्रयोग: । "लग्नारिकर्महिबुकेषु शुभे स्थिते वा द्यूनान्त्य-
लग्नरहितेष्वशुभग्रहेषु । यातुर्भयं न भवति प्रभवेत् समृद्ध
ायस्तनापि किमुतारिसमागमेषु" ॥ शिलाप्रतरणयोग: ।
'मूर्त्तिवित्तसहजेषु संस्थिता: शुक्रचन्द्रसुततिग्मरश्मय: । यस्य
ानसमये रणानलं तस्य यान्ति शलभा इवारय:" ॥ अरि-
ाशभयोग: । "शुक्रवाक्पतिबुधैर्धनसंस्थै: सप्तमे शशिनि
ाग्नगतेऽर्के । निर्गतो नृपतिरेति कृतार्थो वैनतेयवदरीन्
वनिगृह्य" ॥ अरिवैनतेययोग: । "विपक्षशान्त्येष्ववन:
ाधाइचान्द्रिर्वलो यस्य गुरुश्च केन्द्रे । तस्यारियोषाभरणै:
प्रयाणि प्रिया: प्रियाणां जनयन्ति सैन्ये" ॥ अरियोषाभरण-
ोग: । "वर्गोत्तमगते चन्द्रे लग्ने वा चन्द्रवर्जिते । चतुराद्यै-
ाईष्टे नृपाद्या विंशति: स्मृता:" ॥ राजयोग: । "मेषादि-
ादशराशीनां स्वोच्चवर्गस्थे लग्ने चन्द्रे च यत्र कुत्रापि स्थिते
चन्द्रवर्जितैश्चतुरादिभिर्ग्रहैर्वीक्षिते" ॥ अयमर्थ: । द्वादश-
ाशिषु लग्नस्य द्वादश एव स्वोच्चवर्गांशास्तत्र कुम्भं वर्जयित्वा
एकादशैव स्थिता एवं चन्द्रस्यापि हयिकवर्जनात् एकादशैव
ग्यामानि स्युरिति द्वाविंशति: कुम्भलग्ने दोषदर्शनात् त्याग: ।
यथा । "न कुम्भलग्ने शुभमाह सत्यो न भागभेदात् यवना
वदन्ति । हयिकराशिश्चन्द्रस्य नीचगृहमिति चन्द्रपक्षे हयि-
कवर्जनम् ॥ सर्वग्रहनभ्रमपेदृष्टे लग्ने भवति महीपाल: ।
ाशिभि. शुभै: सर्वविगतभयो दीर्घजीवी च" ॥ जातकोक्त-

मित्तं कुभोजनम्" ॥ भोजने चीरवर्जनम् उत्तरदिगितरपरम्। पूर्वादिप्राशनविधिः। भुजबलभीमः। "सर्पिस्तिलौदन-भक्ष्यैः पयसा च भुक्त्वा पूर्वादिवारपरथाखनरैर्गतस्य। सोढुं प्रतापमरयो न नृपस्य शक्ता गन्धद्विपस्य शलभा इव दानगन्धम्। शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः। एकतस्तु मनो यातुस्तद्धि शुद्धं जयावहम्। रिक्तः कुम्भोऽनुकूलस्थः शस्तोऽम्भोऽर्थीयियासतः। चौर्य्यविद्या वणिज्यार्थमुद्यतानां विशेषतः। मेघाः शस्ता घनास्निग्धा गजहं हितमन्दिताः। अनुलोमातडिच्छस्ता शक्रचापस्तथैव च। अप्रशस्ते तथा ज्ञेये परिवेशप्रवर्षणे। जलजानि च पुष्पाणि देवदूर्वार्द्रगोमयम्। कृष्णताम्र यवाः शस्ताः शवाश्रुदितवर्जिताः। अनुलोमो वृषो नर्दन् धन्या गोर्महिषस्तथा। गमनप्रतिषेधाय गावः प्रत्युरसिस्थिताः। प्रागुदीच्योः शिवाः शस्ताः शान्ताः सर्वत्र पूजिताः। धूमितार्भिमुखी हन्ति स्वरदीप्तादिगीश्वरान्। सुत्तिप्रासिध सूर्याच्च फलं दिक्षु तथाविधम्। अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततो परा" ॥ दग्धादि दिङ्निर्णयः। "विध्ययथापतः पक्षौ धुन्वन् ध्वांक्षो भयङ्करः। प्रत्युरस्युपसर्पस्तु सस्वनश्च भयङ्करः। ध्वांक्षः पार्श्वद्वयेनापि शस्तापाथानुलोमगः। वामे शवशिवा कृष्णा दक्षिणे गोस्वगद्विजाः" ॥ दीपिकायाम्। "नृपयातपवारणेभशस्त्राध्वज देहामयसूचयत् लयाय। सभयो विचरन् विना निमित्तं न शुभः श्वाभिमुखो भवन् निखनगाम्। दन्तरोगार्दितास्त्रस्ताः कलहाभियकाङ्क्षिव। आपगान्तरितामत्तान् ग्राह्याः शकुनाः क्वचित्। क्रोशादूर्द्ध शकुनचरितं निष्फलं प्राहुरेके। तत्रानिष्टे प्रथमशकुने मानयेत् पञ्चषट्। प्राणायामानृपतिरशुभे षोड़शैव द्वितीये प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीय." ॥ मत्स्य-

पुराणे "दृष्ट्वा निमित्तं प्रथममङ्गल्यविनाशनम्। केशवं पूजयेद्विद्वान् स्तवेन मधुसूदनम्। द्वितीये तु ततो दृष्टे प्रतीपे प्रविशेद् गृहम्। एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः। गच्छेति पश्चाच्छुभदः पुरस्ताच्च विगर्हितः। उत्तानशय्यासनपादुकादि निष्ठुतिदुर्दर्शनमैथुनानि। नेष्टानि शब्दाश्च तथैव यातुरागच्छति स्वप्नविघ्नस्थिरायाः। विसर्जयति यच्छोक एकश्च प्रतिषेधति। सविरोधोऽप्रमायातुर्याणो वा बलवत्तरः। अनुलोमगते प्रदक्षिणसुरभौ देहसुखेऽनिले गतः। तिमिराजिनभस्मिमालिप्रभवं हन्ति बलानि विद्विषाम्। ध्वजातपत्राम्बुधसविपातस्थितो प्रयाणे यदि मानवानाम्। उत्तिष्ठतो वाऽसुरमिति सङ्गं यातोऽथवा तन्नृपतेः क्षयाय। पौषादि चतुरो मासान् वृष्टिं दृष्ट्वा न संव्रजेत्। यस्तु संप्रस्थितो यात्रां ब्राह्मणानुपमन्यते। स्वकीयां परकीयां वा स्त्रियं पुरुषमेव च। ताडयित्वा तु यो गच्छेत्तदन्तं तस्य जीवितम्। यात्राकाले तु संप्राप्ते मैथुनं यो निसेवते। रोगार्त्तः क्षीणकायश्च स निवर्त्तेत वा न वा। स्नात्वा तु मैथुनं रात्रौ प्रभाते यः प्रतिष्ठते। नासौ प्रतिनिवर्त्तेत दुःखञ्च प्राप्नुयान्नरः। कटुतैल-, गुड़क्षीरपक्वमांसाशनन्तथा। भुक्त्वा यो यात्यसौ मोहाद्दराधितः स निवर्त्तते"। वराहपुराणे। "तृणोदकाढ्येषु वनेषु मत्ताः क्रीडन्तु गावः स वृषाः स वत्साः। क्षीरं प्रसुवन्तु सुखं स्रवन्तु शीतातपव्याधिभयैर्वियुक्ताः। इमं मन्त्रं विशुद्धात्मा जपेन्नित्यं समाहितः। गच्छन् तिष्ठन् स्वपन् जिघ्नन् भुञ्जन् क्रीड़न् प्रमुत्सृजन्। महाभयेषु सर्वेषु विषमेषु समेषु च। प्रयाणकाले च तथा ग्रीतव्यमभयप्रदम्"। मत्स्यसूक्ते "बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः। महोत्सवे च माङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः"। ध्वनिरुलुध्वनिः। दीपिकायाम्। "सिद्धा-

त्मकादर्शपयोऽञ्जनानि बद्धैकपश्वामिषपूर्णकुम्भाः । उष्णीष
भृङ्गारवृद्धमानपुंयानवीणातपवारणानि"। भृङ्गारः कनका-
लुका। "दधिमधुघृतरोचनाकुमार्य्योध्वजकनकाम्बुज नव
पीठशङ्खाः । सितवृषभकुसुमायुधालिमीनद्विजगणिकासजनाश्च
चारुवेशाः । ज्वलितशिखिफलाचतेक्षुभक्ष्यद्विरदमृदङ्गाङ्कुश-
चामरायुधानि । मरकतकुरुविन्दपद्मरागस्फटिकमणिप्रमु-
खाश्च रत्नभेदाः । स्वयमथ रचितान्य यत्नतो वा यदि कथि-
तानि भवन्ति मङ्गलानि । स जयति सकलां ततो धरित्रीं
प्रहरणमङ्गलान्भनस्तुतेरुपास्य निर्गतस्य तु द्वारादेः" शिरसश्चा-
भिघातनम् । "छत्रध्वजादि वस्त्राणां पतनञ्च तथाऽशुभम् ।
करीषगर्भिणी चापि भग्नभाण्डावलोकनम् । कार्पासौषध-
कृष्टधान्यलवणक्लीवास्थितैलं वसापङ्काङ्गारगुडादिचर्मसक्तः
क्लेशायः स व्याधिताः । वान्तोन्मत्तजटोर्ध्वनं वृषतुषचक्षुधा-
मतकाषयो मुण्डाद्याक्तविमुक्तकेशपतिताः कापायिपापाशुभाः ।
कुटुम्बकलहा गृहज्वलनमात्तेर्षं योषिताम् । विडालमसमरं
सुत स्खलितमम्बरादेस्तथा । दुरुक्तमतिकोपिता मदिपयोश्च
युद्धं भवेत् । प्रयाणसमये नृणामभिमतार्थविच्छित्तये" ॥
यान्यत्र मङ्गलामङ्गलानि निर्गच्छतां प्रदिष्टानि । स्वप्नेऽपि
तानि शुभाशुभानि विड्लेपनं पुनर्धन्यम् । एकस्यां यदि
चेद्रात्रौ शुभं वा यदि वाऽशुभम्"। तथा च मत्स्यपुराणे
पुरूरवसा कृतम् । "कृतकृत्यो यथा कामं पूजयित्वा जना-
र्दनम् । स्वप्नस्तु देवदेवस्य न्यवेदयत धार्मिकः" इति । दुःस्व-
प्नाकथनं धन्यं पुनः प्रस्वापनन्तथा । प्रात स्नानं तिलैर्होमो
ब्राह्मणानाञ्च भोजनम् । स्तुतिश्च वासुदेवस्य तथा तस्य च
पूजनम् । चतुस्कन्दं भुजस्कन्द तथा दुःस्वप्नदर्शनम् । शयनाद्
समुत्थानमप्यत्र शमयाय मे । चक्रस्वरूपो भगवान् प्रीयतां मे

जनार्दनः। मन्त्रेणानेन चाभ्यर्च्य प्रार्थयेद्दोषसूचने। चिन्तादुष्टेन शोकेन व्याधिग्रस्तेन वा पुनः। कामयुक्तेन चित्तेन स्वप्ने न फलभाग्भवेत्। अविज्ञातस्वरूपाणां नराणां ज्ञानहेतवे। स्वप्ने दृष्टानि वक्ष्यामि पुण्यपापोद्भवानि च"। एवञ्चैषां सूचकत्वं न कारकत्वम् "आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति। व्याधिभ्यो मुच्यते रोगी अरोगी सुखमाप्नुयात्। दीपमन्नं फलं यस्तु कन्यारत्नं रथध्वजम्। यस्तु पश्यति स्वप्नान्ते लभते चोत्तमां श्रियम्। उपानहौ च छत्रञ्च लब्ध्वा यः प्रतिबुध्यते। असिं वा निर्मलं तीक्ष्णमध्वानं तस्य निर्दिशेत्। देवताश्च द्विजा गावः पितरो लिङ्गिनः स्त्रियः। यद्वदन्ति नरं स्वप्ने तत्तथैव भविष्यति। आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम्। आरुह्य नौकां प्रतिगृह्य वीणां भुक्त्वा रुदित्वा ध्रुवमर्थलाभः। भक्षणञ्चार्द्रमांसस्य मत्स्यस्य पायसस्य च। दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च। सुरारुधिरमद्यानां पानं चौरस्य शोभनम्। जीवतां भूमिपालानां सुहृदामपि दर्शनम्। उरगो वृश्चिकश्चैव जलौका दृश्यते यदि। तदा पुत्रादि लाभः स्यादगम्यागमने शुभम्। सर्वाणि शुक्लानि सुशोभनानि कार्पासभस्मास्थिकपालवर्जम्। सर्वाणि कृष्णानि विनिन्दितानि गोहस्तिदेवद्विजवाजिवर्जम्। मरणं बन्धनं धन्यं वह्निदाहो गृहादिषु। शुक्लपीताम्बरा नारी शुक्लपीतानुलेपना। अवगूहति यं स्वप्ने तस्य स्यात् सर्वतः सुखम्। कृष्णरक्ताम्बरा नारी रक्तकृष्णानुलेपना। अवगूहति यं स्वप्ने व्याधिं मृत्युञ्च निर्दिशेत्। वराहर्क्षखरोष्ट्राणामारोहो महिषस्य च। भक्षणं पक्वमांसानां तैलस्य कृशरस्य च। नर्त्तनं हसनञ्चैव विवाहो गीतमेव च। तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम्। दिव्यान्तरीक्षभौमानामुत्पातानान्तु दर्शनम्। स्वप्ने पश्यति

प्तात्मानं रक्ताम्बरविभूषणम्। मलिनाम्बरधारित्वमभ्यङ्ग-
श्चौरनम्नता। उष्ट्रवाचरणं यातो दोलारोहश्च निन्दितः" ॥
इति स्वप्नफलम्।

"सर्वतः सुतमगोर्भिनं मृतं गोसुतं मरणमेव करोति।
केचिदाहुरफलं बलात् क्षतं वृषपौनसितवालक्षतञ्च ॥ वित्तं
शक्रेऽपि कार्य्यसिद्धिरतुलाग्रमी हुताशे भयं याम्यमग्निभयं
सुरद्विषि कलिलाभः समुद्रालये। वायव्यां वरवस्त्रगन्धसलिलं
दिव्याङ्गना चोत्तरे। ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं
मध्वने। क्ष्वेडीकृते सुतेऽप्येवमूचुः केचिच्च कोविदाः" ॥
• विष्णुधर्मोत्तरे। विष्णोरित्यधिकृत्य "नाम संकीर्त्तनं नित्यं
क्षुतः प्रस्खलितादिषु। वियोगं शीघ्रमाप्नोति सर्वाक्षर नात्र
संशयः" ॥ अतएव विष्णुपुराणम्। "स्मृते सकलकल्याण-
भाजनं यत्र जायते। पुरुषमजं नित्यं व्रजामि शरणं
हरिम्" ॥ युद्धयात्रायाम्। "यत्र ऋक्षे स्थितो राहुर्वदनं
तद्विनिर्दिशेत्। मुखात् पञ्चदशे ऋक्षे तस्य पृष्ठं प्रतिष्ठितम्।
राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश। त्रयोदशैरभो-
ग्यानि मृतपक्षगतानि च ॥ मृतपक्षे मुखं तस्य गुदं जीवार्द्ध-
मध्यगम्। जीवपक्षे यथामार्गे मृतपक्षे रवौ स्थिते ॥ तदा
रणे शुभा यात्रा विपरीते तु हानिदा। चन्द्रादित्यौ यदा
युक्तौ जीवपक्षे व्यवस्थितौ ॥ तत्र क्षेमं जयोलाभो यात्राकाले
न संशयः। मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ ॥
तदा हानिर्भयो भङ्गो मृत्युर्यात्राफलं मतम्। जीवपक्षे स्थिते
चन्द्रे कार्य्यं स्यादमृतोपमम् ॥ मृतपक्षे मृतं ज्ञेयं यतश्चन्द्र-
बलाबलम्। युद्धकाले यदा शीघ्रं यात्रायोगेन लभ्यते ॥ उत्-
पन्नौ तु तदा शीघ्रं तत्कालेन्दुदिवाकरौ। दृष्टा नाड्यो हृता
षिष्ट्या पष्ठिभागात्मयेषके ॥ अश्विन्यादीन्दुभुक्तेन योगात्तत्काल-

चन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यः कर्त्तव्योऽष्टकालिकः । अहो-रात्रस्य मध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले ॥ सर्व्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । दण्डैश्च पञ्चभीरात्रावेवं सूर्य्यादिगं क्रमात् ॥ लग्नवद्भुक्तभाग्यस्य त्यागाच्छेषक्रमात् क्रमः" ॥ इष्टा मात्रा: कर्मकालीनदण्डसंख्या सूर्य्योदयावधि गतरात्रि-प्रविष्टनक्षत्रदण्डसंख्यावधि वा सप्तविंशत्या पूरिताः षष्ट्या यो लब्धः सोऽश्विन्यादिचन्द्रभुक्तत्या नक्षत्राद्ययुक्तः सप्तविंशा-धिकशेषत्यक्तपद्याय यत् संख्यानं तेन नक्षत्रं तत्र चन्द्रः । यः शेषस्तत्रोदयावधि कर्मकालीनदण्डसंख्याया गतरात्रिप्रविष्ट-नक्षत्रदण्डसंख्यायोगात् यो भवति तत्संख्यदण्डा भोग्याः । सूर्य-पक्षे सूर्य्यभुक्तनक्षत्राद्ययुक्तो लभ्याङ्क इति विशेषः । "प्रवासः सुस्थता मृत्युर्हास्यं जायाज्वरोऽरतिः । नष्टता शून्यता क्रीडा सुप्तिर्भुक्तिश्च शेषतः । एताद्वादशावस्था शशाङ्कस्य दिने दिने । शुभाशुभेषु कार्य्येषु फलं नाम्यनुरूपतः" ॥ इति तत्-कालीनराङ्क तत्कालचन्द्रादित्यव्यवस्था च यात्रायां निर्दिष्टया। हरिवंशे "मरणं सहमानानां युद्धतां विजयो ध्रुवम्" ॥ विदे-शगतभ्रात्रान्वेषणार्थं न गन्तव्यम् । यथा विष्णुपुराणम् । "ततःप्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजः । प्रयातो नश्यति तथा तत्र कार्य्यं विजानता" ॥ ततः समस्तापृथिवीं द्रष्टुं गतानां हर्य्यश्वादीनां तदनुगामिनाञ्च तद्भ्रातॄणां शवलाश्वा-दीनाम् अनिवर्त्तनदर्शनात् । मत्स्यपुराणेऽपि । "ततःप्रभृति न भ्रातुः कनीयान् मार्गमिच्छति । अन्विष्य दुःखमाप्नोति तेन तत् परिवर्जयेत् ॥ तिथावरिक्ते शुभदे च चन्द्रे पापेषु केन्द्राष्टमवर्जितेषु । धाम्ये स्थिरे वा निजमे सुलग्ने गृहं विशेद्वा ॥ महत्तभूपः । परविषयपुरान्तो साधुदेवद्विजस्वं कुलजनवनिताय यत्राधिपो नोपहन्यात् । विहगतुरगमत्ता-

मार्त्तभीतांश्च हन्यात्कुभतिथिदिवसर्क्षे द्दष्टसैन्यो विशेष।
पुष्टैः शुक्रेन्दुलोके भुवलभुवलभिद्विष्णुमैत्रेन्दुपौष्णैः सलग्ने पापजन्मोदयपतिषु विरन्ध्रारिगेन्द्वारसौम्यैः। व्ययायारिस्थै-रयाष्टव्ययगैर्हरहितैः सद्ग्रहैः केन्द्रकोणे वीर्य्याढ्ये चारियांशे सुदिनतिथिशुभेन्दौ नृपस्याभिषेकः" ॥

अथ छत्रचक्रम्। "आदौ चक्रं समालिख्य छत्रत्रयं सुशोभनम्। अश्विन्यादिलिखेत्तत्र सप्तविंशतिमानि च ॥ अश्विन्याद्यं मघाद्यञ्च मूलाद्यञ्च क्रमेण तु। उत्तरे पूर्वदण्डे च एतच्छत्रत्रयं मतम् ॥ प्रतीचीमध्यरेखायामादौ यात्यन्तं ध्वजाधिपः। आग्नेय्यन्तं नराधीशो नैरृत्यन्तं गजाधिपः ॥ अश्वाध्यक्षो नराध्यक्षो गजाध्यक्षः क्रमेण तु। एषां छत्रविभागेन ज्ञातव्यञ्च शुभाशुभम् ॥ अन्येषां भूपतानाञ्च यत्र छत्रे व्यवस्थितम्। तच्छत्र तस्य भूपस्य शुभाशुभफलप्रदम् ॥ चामरं कलसी वीणा छत्रं दण्डः पतद्ग्रहः। आसनं कीलकं रज्जु-र्नवभेदाः प्रकीर्त्तिताः ॥ यस्य छत्रे स्थितः सौरिः भङ्गं तस्य विनिर्दिशेत्। फलञ्च चामरादीनां प्रत्येकञ्च वदाम्यहम् ॥ चामरे चपलता वायोरनावृष्टिस्तु जायते। दुर्भिक्षञ्च भवेद्घोरं प्रजापीडा न संशयः। कलसस्थे भवेद्युद्धं रणे भङ्गो भयत्रयम्। वातपातादिकं सर्वं जायते नात्र संशयः। वीणासंस्थेऽर्कतनये पट्टराज्ञी विनश्यति। चलचित्तो भवेद्राजा भयभीता च मेदिनी। यदा रूपतनये सौरिश्छत्रे दण्डे पतद्ग्रहे। तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः। आसनस्य भवेन्नाश आसनस्थे शनैश्चरे। युवराजक्षयः कीले बन्धनं रज्जुसंस्थिते। सौम्ययुक्तोऽतिचारस्थः शनिर्व्यर्थफलो न हि। वक्रगः क्रूर-युक्तश्च सर्वक्रूरं करोति सः। शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः। छत्राधीशमराज्ञी वै निश्चितं छत्रभङ्गदाः।

क्रूरचतुष्टयश्चैव बुधचन्द्रेण संयुतम्। पूर्वच्छत्रविनाशाय सूचितं पूर्वसूरिभिः। एवं पापचतुष्कञ्च यदा शुक्रेन्दुसंयुतम्। दक्षिणाशापतेश्छत्रविनाशो भाषितो बुधैः। एवमन्येषु राज्येषु यत्र यस्य च सम्भवः। उक्तग्रहसमायोगाच्छत्रभङ्गं विनिर्दिशेत्। यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः। भौमश्च गुरुराहू च रविचन्द्रौ बले समौ। यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः। क्रूरयुक्तो बुधः क्रूरश्चन्द्रः पूर्णस्तथाशुभः। सौम्याः क्रूराः यदा क्वचे द्रष्टा वै छत्रसंस्थिताः। छत्रभङ्गो भवेत्तस्य परचक्रागमेन च। नृपनामाद्यंशेराहुः केतुर्वा यदि संस्थितः। छत्रभङ्गो भवेत्तस्य विप्रदानेन भूपतेः॥ कनकं साहसं यानं वस्त्राश्वगजवाहनम्। विप्रस्य तत्तिद्राजा छत्रस्थे क्रूरखेचरे॥ एवं ज्ञात्वा यदा राजा करोति मङ्गलात्मिकम्। यदुक्तं यामले तन्त्रे तेन शान्तो भवेन्नृपः" ॥

अथ सिंहासनचक्रम्। "अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम्। सप्तविंशतिनक्षत्रैरेकैकस्य नराश्रकम्॥ अश्विनीमघमूलाद्यं पञ्चनाडी विभेदतः। अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम्॥ मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। इतरेषु च भागेषु नृपनामसतो वदेत्॥ शुभाशुभमिदं सर्वं यत्र यस्य शनिः स्थितः। नाडिकापञ्चवेधेन पर्कंस्थासनं भवेत्॥ आधारमासनं पट्टं सिंहं सिंहासनन्तथा। षड्वेधवशाज्ज्ञेयं सौम्यैः क्रूरैः शुभाशुभम्॥ अथ आधारगे राजा अभिषिक्तो यमासने। पराधीनगतं राज्यं कुरुते नात्र संशयः॥ आसनस्थेन चक्रेण भीतियुक्तो भवेन्नृपः। प्रधानपुरुषो देवः प्रजाशान्तिकरो भवेत्॥ पट्टस्थे यदा राजा अपतिष्ठो नृपासने। पूर्वराजस्थितैस्तुल्यश्चिरं पाव-

यते महीम्॥ सिंहरूपो भवेद्राजा सिंहचैवासने स्थितः। संग्रामस्थ प्रियो नित्यमसाध्यो मन्त्रिमण्डलैः॥ सिंहासनगते धिष्ण्ये तेजस्वी भीषणाकृतिः। चलचित्तो महाक्रोधी प्रजापीड़ाकरो नृपः॥ तत्कालेन्दुगते ऋक्षे क्रूरनिर्वेधनाडिके। शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने॥ ईदृशे च समायोगे उपविष्टो य आसने। उच्छाद्य मलसंघातमेकच्छत्रं करोति सः॥ क्रूरग्रहगता नाडीमुपविष्टो य आसने। बन्धनं भूमिनाशश्च तथा मृत्युः प्रजायते॥ आधार ऋक्षगः सौरिः रनावृष्टिं करोति च। दुर्भिक्षं रौरवं तत्र प्रजापीडा च जायते॥ आसने च यदा सौरिर्युद्धे भङ्गप्रदा भवेत्। अथवा व्याधिपीडा च मनोदुःखं प्रजायते॥ पट्ट ऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति। प्रियो वाथ कुमारो वा मन्त्रिबन्धुचयोऽपि वा॥ सिंहे सिंहासने चापि यदा तिष्ठति सूर्य्यजः। तदा मृत्युर्न सन्देहो यदि शक्रसमो नृपः॥ अनिराह्वर्कमाहेया यदा चन्द्रेण संयुताः। यस्यासनगता एते तस्य राज्ञो भयङ्कराः॥ क्रूरयुक्तोऽथ वक्रस्तु क्रूरनाडीगतोऽपि वा। आसने चन्द्रयोगेन कालरूपी शनैश्चरः। एवं शुभफलं दद्याद्देवमन्त्री न संशयः। करोति विपुलं राज्यं यस्यासनगतो गुरुः" ॥ इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचितं ज्योतिस्तत्त्वं समाप्तम्।

---

# मलमासतत्त्वम्।

"प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम्। मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः॥ मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये। प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमी-व्रते॥ दुर्गोत्सवे व्यवहारे वेदाद्याद्यादिनिर्णये। तडागभवनो-त्सर्गे वृषोत्सर्गमये व्रते॥ प्रतिष्ठायां परीक्षायां ज्योतिषे वास्तुयागके। दीक्षायामाह्निके कृत्ये क्षेत्रे श्रीपुरुषोत्तमे॥ सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे। इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः॥ प्रणम्य भारतीकान्तमज्ञानध्वान्त-भास्करम्। सतां मुदे स्मृतेस्तत्त्वे तत्त्वं भाषे मलिम्लुचे॥ मासशब्दं तथोत्पत्तिवाक्यं दर्शादिकस्य च। प्रकृतौ विकृते-र्धर्मः पक्षादिकालनिर्णयः॥ चान्द्रसावननाक्षत्र सौराणाञ्च निरूपणम्। तथा कर्मविशेषेषु चान्द्रादिमासनिर्णयः॥ मिला-म्लौचे न यात्रा स्यादष्टौ व्यसनानि च। दैवस्य लक्षणं कर्मसिद्धौ दैवपौरुषयोः॥ कालश्च हेतवः कष्टौ त्रिपुरघ्नं प्रदा-नकम्। अगस्त्यस्य मुनेरर्घ्यमुत्तरायणपक्षयोः॥ चूडोप-नयनं सन्ध्याकालेऽतीतेऽपि वा भवेत्। सीमन्तोन्नयनं जाते-ऽप्युपनायोत्तरावधि॥ स्नाने च कार्त्तिकादेस्तु सौरचान्द्रवि-कल्पनम्। तदशक्तौ प्रतिनिधिर्माघस्नानविधिस्तथा॥ स्नान-तर्पणयोर्मध्ये प्रातःसन्ध्यातिपातता। पौर्णमास्यन्तमासेन मूलकानामभक्षणम्॥ सौरस्य माघस्नाने चान्द्रस्य प्रयो-जनम्। चान्द्रसौराख्यकार्याणां वाक्ये मासौ तथाविधौ॥ चनाव मुख्यचान्द्रः स्याद्योमेषस्य साधकम्। मासशब्दस्य दर्शान्तमपक्षे साधकान्तरम्॥ तिथेर्नक्त दिनत्वञ्च धर्म-

श्राद्धेन बाध्यता। धर्मशास्त्रस्य भोगानां त्रिपुरुषत्वनिर्णयः॥ त्रिंशत्तिथ्यात्मको मासो लग्नमानादिनिर्णयः। नाम्नत्ववक्तैरायुस्ताद्द प्राक् तिथौ तथा॥ षाण्मासिकाब्दिके श्राद्धे चैवादेवान्द्रवाचिता। हेतुवक्ष्यायचर्चात्र मेषादिराशिनिर्णयः॥ श्रद्धिपाद्दकमानस्य चैवादेरव्दवाचिता। मलज्येष्ठे विचारोऽत्र संवत्सरनिरूपणम्॥ लक्षणं मलमासस्य तद्युगमस्यैकशायने। विचारः सावनाहेन सहचारप्रवर्त्तनम्॥ चयमासा द्विनासत्वं संचेयो मलमासके। दोषाकालविधानस्य दोषा प्रतिप्रसूतिका॥ शूद्रस्योद्धारयुद्धाम्नतिनिषेधस्य स्त्रिया अपि। सूतकेऽपि च पूजादिदर्शने विष्णुकीर्त्तनम्॥ अधिमासे विवाहादिनिषेधस्य निरूपणम्। सपिण्डीकरणश्राद्धात् सिद्धिः स्यादाब्दिकस्य च॥ ग्रहदोःस्थफलस्यापि द्रव्यादौ पाकनिर्णयः। स्मार्त्ते शूद्राधिकारस्य प्रायश्चित्तं मलिम्लुचे॥ दत्तनष्टस्वयदानं गजच्छाया निरूपणम्। शूद्रस्यापि मघाश्राद्धमविभक्तैः पृथक् क्रिया॥ मघानिमित्तके श्राद्धे पुत्रो पिण्डं विवर्जयेत्। अपिण्डकमघाश्राद्धात् पञ्चयाब्दकृतं भवेत्॥ पार्वणाशनदानादौ ये चात्र त्वेति मापणम्। पर्य्युदासो गयायान्तु कालदोषः प्रतीक्षणम्॥ नवान्नश्राद्धकालस्य विलम्बादिविवेचनम्। कालाशुद्धिविचारोऽत्र चातुर्मास्य व्रतं तथा॥ ऋतुभेदात्तयोस्थाने दोषाभावविनिर्णयः। वाम्य कृष्णस्य तुष्ट्यर्थं प्रकर्त्तव्यं मुमुक्षुणा॥ महादानस्य गणना तथा तस्य च लक्षणम्। व्रतं यश्मलमासाद्दे पितृपक्षस्तक्रिया॥ अब्दयुक् कृष्णपक्षीयश्राद्धसम्यक् निरूपणम्। मलमासे त्वमावास्या प्रत्याब्दिकविवेचनम्॥ सपिण्डनस्यापकर्षो गर्भहत्यादिहेतुकः। सन्न्यासप्रतिषेधश्च कलौ धनविशोभवेत्॥ पुत्रेतरेण कर्त्तव्यमेकोद्दिष्टं मृताहनि। न पार्वणं कदाचित्तु दर्शादिकमृतस्य च॥ मल-

मासान्तरेऽपि स्यान्मलमासस्मृतान्हिकम् । निबन्धान् बहुधा-लोच्य निबध्यन्ते सतां मुदे" ॥

अथ मासत्रयम् । तत्र लघुहारीतः । "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः । अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ" ॥ यत्र शुक्लप्रतिपदि । "तथाहि अमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्या यजेत" इति श्रुतिविहितदर्शपौर्णमासयागयोः कर्म्मस्वरूप-ज्ञापकश्रुतीय समामनन्ति यथा "आग्नेयाष्टाकपालोऽमावा-स्यायां पौर्णमास्याञ्चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामेवाग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायामिति" । ताभ्याम् आग्नेयाष्टाकपालोपांशुयाजाभ्यां तेनाग्नेयाष्टाकपालोपांशु-याजाग्नीषोमीय एकादशकपालयागास्त्रयः पौर्णमास्याम् आग्नेयाष्टाकपालैन्द्र-दधि-पयो यागास्त्रयोऽमावास्यायामि-त्यर्थः । आसु श्रुतिषु अमावास्या पौर्णमासीपदानि प्रतिपत्-सहिततदुभयपराणि तत्र पूर्वयोरारम्भः प्रतिपदोर्यागः तथा च "द्वे ह वै पौर्णमास्यौ द्वेऽमावास्ये तस्मात् प्रतिपद्युपवसन् यजेतापरेद्यु." । इति श्रुतिः अत्र पौर्णमास्यौ पौर्णमासी प्रतिपदौ अमावास्येऽमावास्या प्रतिपदौ शतपथब्राह्मणेऽपि "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति" । स्मृतयश्च यथा गोभिलः । "पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः" । पारस्करः । "पक्षादिषु स्थालीपाकं श्रपयित्वा दर्शपौर्णमास-देवताभ्यो जुहोतीति" तथा कल्पसूत्रम् । "दर्शपौर्णमासाभ्यां मास यजन्ते पक्षादौ यज्ञविस्तारवेदिभिरिति" । अस्यार्थः । यावज्जीवकयोर्दर्शपौर्णमासयोः प्रकृतीभूतयोर्विकृतीभूतौ माम-साध्यौ दर्शपौर्णमासौ कौण्डपायिनामयनीयौ पक्षादौ यष्टव्यौ ।

अत्र पक्षादौ यज्ञविस्तत्सर्वमिष्यति। नमासीत्यनेन विकृतिगतेन पक्षादावित्यनेन प्रकृतीभूतयोरपि दर्शपौर्णमासयोः पक्षादिकालत्वमवधारितम्। यथा ज्योतिष्टोमे। द्वादशशतगोदक्षिणा विभागः षोडशर्त्विजां तद्विकृतीभूते सत्रात्मके द्वादशाहसाध्ये शतेनाह्निनोदीचयन्तीत्यादिदर्शनेन निर्णीयते। तत्र विभागं मनुरप्याह। "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशैकपादिनः"। दक्षिणा गोशतविभागाय श्रौतकात्यायनोऽपि अथ द्वादशद्वादशाद्येभ्यः षट्षट्द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्य इत्यत्र षोडशानामृत्विजां चतुरश्चतुरः कृत्वा चत्वारो वर्गा इति तेन दर्शपौर्णमासयाजिना पक्षादियाजिना च यत्र शुक्लप्रतिपदि इन्द्राग्नी इज्येते अमावादिः मध्ये मासमध्ये कृष्णप्रतिपदि अग्नीषोमौ इज्येते इति कृत्वा स्मृतौ एवममावास्यायामपराह्णे पिण्डपितृयज्ञेनाचरन्तीति श्रुत्युक्तपिण्डपितृयज्ञाङ्गाग्नौकरणहोमीयसोमाय पितृमते स्वाहेति मन्त्रप्रकाश्यौ पितृसोमकौ अमाप्तौ माससमाप्तौ अमावास्यायां इज्येते इति कृत्वा स्मृताविति अत्र विशेषतो मासादिमध्यान्तकीर्त्तनात् शुक्लप्रतिपदि दर्शान्त एव मासशब्दस्याभिधेयताया मुनेः स्वरसोऽवगम्यते सावनसौरादीनां गौणतायामपीति। अत्र "पर्वणो यस्तुरीयांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः"॥ इति बौधायनवचनेन ऋग्वेदिनां यागकालतया बोधितोऽपि दर्शपौर्णमास्यंशोऽनियततया न मासादिमध्यघटकः किन्तु पूर्वोक्त श्रुत्यादेश्छन्दोगपरिशिष्टात् गर्गवचनाच्च पर्वकालकरणपक्षेऽपि प्रतिपदि समापनस्यावश्यकतया प्रतिपदेव तद्घटिकेति। तथा च छन्दोगपरिशिष्टम्। "पक्षादावेव कुर्वीत सदा पक्षादिक-

श्वरम् । "पूर्वाह्न एव कुर्वीत विद्धेऽप्यन्ये मनीषिणः"॥ विद्धे द्वितीयाविद्धे पश्चादाविवेत्ययोगव्यवच्छेदपरं न त्वन्ययोगव्यवच्छेदपरम् । तथा कालादर्शकालमाधवीयप्रभृति दाक्षिणात्य वैदिकग्रन्थेषु गर्गः । "प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कर्त्तव्येष्टिः कर्त्तव्या योगवित्तमैः"॥ प्रणीयाग्निमिति शेषः । गोभिलोऽपि । "आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् । तदहर्याग इष्येत परतश्चेत् परेऽहनि"॥ पूर्वाह्नापराह्नद्विधाविभक्तदिनस्यावधित्वेनावर्त्तनमाह स्कन्दपुराणम् । "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम् । आवर्त्तनादावरस्य छायायाः परिवर्त्तनात्"॥ प्राक् पूर्वाह्णः । अतएवोक्तम् । "अश्वत्थं वन्दयेन्नित्यं पूर्वाह्णे प्रहरद्वये । अत ऊर्द्ध्वं न वन्देत अश्वत्थन्तु कदाचन"॥ परतोऽपराह्णे । त्रिधाविभक्तदिनाभिप्राये तु लोकाक्षिः । "पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते । तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते॥ अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"॥ उपोष्येति नाहोरात्राभोजनपरम् । किन्तु क्रतेऽन्याधाने देवा यजमानस्य समीपमुपवसन्तीति उपवासशब्देनाग्न्याधानमुच्यते । तैत्तिरीय ब्राह्मणे तथा श्रुतेः यथा उपास्मिन् श्वोयक्ष्यमाणे देवता वसन्ति एव विद्वानग्निमुपस्तृणाति । वृद्धशातातपः । "सन्धिश्चेदपराह्णे स्यात् यागः प्रातः परेऽहनि । कुर्वाणः प्रतिपद्भागे तुरीयेऽपि न दुष्यति"॥ ननु चान्द्रवत् सावनादिष्वपि विष्णुधर्मोत्तरे मासपदं सङ्केतितं यथा "चन्द्रमाः सप्तपञ्चान्ते सूर्येण सह युज्यते । सन्निकर्षादयारभ्य सन्निकर्षमथापरम्॥ चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते । सावने च तथा मासि त्रिंशत्सूर्योदयाः स्मृताः॥ आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः । सर्वर्क्षपरि-

वर्त्तेस्तु नाक्षत्र इति चोच्यते"॥ चन्द्रार्कयोः सन्निकर्षात् दर्शात्। अथानन्तरं प्रतिपदमारभ्य अन्यथा सन्निकर्षमारभ्येति ब्रूयात् अपरं सन्निकर्षं यावत् तावत्कालश्चान्द्रः। एतेन सन्निकर्षादि सन्निकर्षान्तो मास इति नारायणोपाध्यायमतं निरस्तम्। त्रिंशद्दिनात्मकः सावनः आदित्यैकराशिभोगावच्छिन्नः सौरः सप्तविंशतिनक्षत्रावच्छिन्नो नाक्षत्र इति चतुर्विधा मासाः। तथा च ब्रह्मसिद्धान्ते "चान्द्रः शुक्लादि दर्शान्तः सावनस्त्रिंशता दिनैः। एकराशौ रविर्यावत् कालं मासः सभास्करः। सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्र इति चोच्यते"॥ नैव चान्द्रसौरसावननाक्षत्र मासोल्लेखित कर्म्मसु ते कीदृशा इत्याकाङ्क्षायां विष्णुधर्म्मोत्तरादिवचनस्य तत्परिचायकत्वेनोपपत्तौ मासशब्दस्य तत्र तत्र शक्तिग्राहकत्वे प्रमाणाभावात्। अनेकशक्तिकल्पने गौरवात् वक्ष्यमाणयुक्तिभ्यश्च चान्द्र एव शक्तिः।

अथ कर्म्मविशेषे मासविशेषादिः। तत्र पितामहः। "आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः। विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः"॥ प्रथमादिपदं यात्राक्षत्रचारपरम्। यत्तु कमसूर्य्यभोग्यराशसंक्रान्तेन यत्र विशेषोद्गयनादिविहितं तत्परश्च अयनस्य सौरमासघटितत्वेन वक्ष्यमाणत्वात् तत्र चूडोपनयनादि। द्वितीयादिपदं सवभृतिवृद्धिप्रायश्चित्तायुर्दायाशौचगर्भाधानपुंसवनसीमन्तोन्नयननामकरणान्नप्राशननिष्क्रमणचूडादिपरम्। तत्र चूडादाविकत्रैव सौरसावनग्रहणं पश्चादुपपादयिष्यामः। तथा च विष्णुधर्म्मोत्तरे। "अध्यायमथ नक्षत्रकर्म सौरेण मानेन सदाध्यवस्येत्। सत्राण्युपास्यान्यथ सावनेन सोमस्य यत्नादरवचारकर्म"॥ अध्यायनम् अध्ययनं यात्रेति यावत्। संवत्सरप्रदीपे। "सिद्धे

धनुषि मीने च स्थिते सप्त तुरङ्गमे। यात्रोद्वाहगृहारम्भघोर-
कर्माणि वर्जयेत्"॥ एतन्मासद्वय यात्रानिषेधो राजेतरपरः।
राज्ञः कार्य्यानुरोधात् सर्वदा यात्राविधानात्। यथा मनुः।
"मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः। फाल्गुनं
वापि चैत्रं वा मास प्रति यथाबलम्॥ अन्येष्वपि तु कालेषु
यदा पश्येत् ध्रुवं जयम्। तदा यायाद्विगृह्यैव व्यसने चोत्थिते
रिपोः"॥ व्यसनान्याह स एव। "कामजेषु प्रसक्तो हि
व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव
तु॥ मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं
वृथाट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोह
ईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणो-
ऽष्टकः"॥ अक्षो द्यूतक्रीडा। तौर्य्यत्रिकं नृत्यगीतवाद्यानि
त्रीणि। दश पैशुन्यमविज्ञातपरदोषाविष्करणम्। साहसं
साधोर्बन्धमादिना निग्रहः। द्रोहो जिघांसा ईर्षाऽन्यगुणा-
सहिष्णुता। असूया परगुणेषु दोषाविष्करणम् अर्थदूषणम्
अर्थानामपहारः देयानामदानाञ्च। अतएव दीपिकायाम्।
"दैवहीनं रिपुं जेतुं यायाद्दैवान्वितो नृपः। योज्या दैवा-
न्वितामात्या दैवहीने तथात्मनि॥ व्यसनी विनष्टधर्मा
त्रिविधोत्पातपीडितो यश्च। पुरुषः स दैवहीनः कथितो
दैवान्वितोऽन्यः"॥ अतएव याज्ञवल्क्यः। "दैवे पुरुषकारे
च कर्मसिद्धिर्व्यवस्थिता। तत्र दैवमभिव्यक्तं पौरुषं पौर्व-
दैहिकम्"॥ अभिव्यक्तं फलोन्मुखीभूतम्। मनुरपि। "युक्ते
दैवे च युध्येत जयप्रेप्सुर्व्यपेतभीः। साम्ना दानेन भेदेन
समस्तैरथवा पृथक्॥ विजेतुं प्रयतेतारीन् न युद्धेन कदा-
चन। अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः। परा-
जयश्च संग्रामे तस्माद्युद्धं विवर्जयेत्। त्रयाणामप्युपा-

यानां पूर्वोक्तानां परिचये। तथा युद्धेत संयत्तो विजयेत रिपून् यथा" ॥ संयत्तः सम्यक्प्रयत्नवान्। कष्टरिपुमाह स एव। "प्राज्ञं कुलीनं शूरञ्च दृढं दातारमेव च। कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः" ॥ कालोऽपि फलहेतुरित्याह मत्स्यपुराणम्। "दैवं पुरुषकारश्च कालश्च पुरुषोत्तम। त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन" ॥ मलाधि गवामयनादीनि मासमवत्सरसाध्यानि। लौकिकं व्यवहारकर्म्म वृत्तिवृत्तादिकं मासेन यास्यसि मासेन दास्यसीत्यादिकम्। अगस्त्यार्घ्यदानं सौरेण सिंहराशौ विधानात्। यथा ब्रह्मवैवर्त्ते "अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः। अर्घ्यं दद्युरगस्त्याय गौडदेशनिवासिनः" ॥ नारसिंहे। "शङ्खे तोयं विनिक्षिप्य सितपुष्पाक्षतैर्युतम्। मन्त्रेणानेन वै दद्याद्दक्षिणाशामुखस्थितः। काशपुष्पप्रतीकाश अग्निमारुतसम्भव। मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते" ॥ प्रार्थनन्तु। "वातापिर्भक्षितो येन वातापिश्च महासुरः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु" ॥ गन्धादिकन्तु। अगस्त्याय नमः इत्यनेन देयं विशेषानुद्देशे सामान्यतः प्राप्तत्वात् दक्षिणाशामुखस्थित इति गन्धादावपि प्रयोगाङ्गकर्त्तृधर्मत्वात् इति रत्नाकरः। तत्पत्न्यर्घ्यमन्त्रस्तु। "लोपामुद्रे महाभागे राजपुत्रि पतिव्रते। गृहाणार्घ्यं मया दत्तं मैत्रावरुणि वल्लभे"। आश्वलायनः। "उदगयाने अपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौडकर्म्मोपनयनगोदानविवाहाः। विवाहः सार्व्वकालिक इत्येके"। विवाहे विषयभेदमाह गृह्यपरिशिष्टम्। "धर्म्म्येष्वेव विवाहेषु कालपरीक्षणं नाधर्म्म्येषु" ॥ व्यक्तं भुजबले। "ब्रह्मादिमिस्त्रयाणि

मासायनर्त्तुदिवसानाम् । अर्वाक् दशवर्षेभ्यो मुनयः कथयन्ति बाल्यकानाम्" ॥ ननु "चैत्रकृष्णद्वितीयायां तिस्त्वेवाष्टकासु च । मार्गे च फाल्गुने चैव आषाढ़े कार्त्तिके तथा । पञ्चयो-र्माघमासस्य द्वितीयां परिवर्जयेत् । अकालहृष्टौ कुर्वीत व्रतबन्धग्रभक्रियाम्" । इति भुजबलोक्तं कथं सङ्गच्छता उपनयनस्याऽस्नायनेनोत्तरायणशुक्लपक्षयोर्विधानात् पारस्करेणापि उदगयने आपूर्य्यमाणे पक्षे पुण्याह इति कर्म्ममात्रे परिभाषितम् अधमासकरणं गर्भाधानादिषु कालविशेषनियतेषु उदगयनादीनां यथासम्भव नित्यत्वानित्यत्वप्रतिपादनार्थमिति हरिशर्मा । गोभिलेनापि "उदगयने पूर्व्वपक्षे पुण्येऽहनि प्रागावर्त्तनादह्नः कालं विद्यात्" इति यामद्वयात्मकपूर्व्वाह्णमध्यंसिकं परिभाष्य यथा देशमेति पुनः उक्तं यथा देशमित्यनेन स्वगृह्योक्तानां मौञ्जपदाम् अपकर्म्मकरणस्याभावास्याथामपराह्ने पिण्डपितृयज्ञस्याप्यस्याप्येवंविधस्योदगयनादि विधविहितस्य ऋतुकालगर्भसम्भन–पूर्व्वकालयज्ञमासादि विहिताधानपुंसवनसीमन्तोन्नयनादीनाञ्च दक्षिणायनादावनर्थानुपपत्त्या ग्रहणम् । अथैवं यथा देशमेति सूत्रबलायं तत्तद्विशेषविधानादेव सिद्धेनायं दोषः । यथादिष्टकालस्य क्रियायामादरार्थमुक्तं तेन तत्तत्कालातिपत्तौ कैपाविशेषः यथा अष्टकापिण्डपितृयज्ञादीनां विधाकराह्णिककल्पेऽपि । "अकाले चेत् कृतं कर्म्म काले तस्य पुनःक्रिया । कालातीतञ्च यत् कुर्य्यादकृतं तद्विनिर्दिशेत्" । यत् कर्म्म यस्मिन् काले विहितं तत्कालाभावेऽपि नाङ्गान्तराभाव इव तत्कर्म्मानुष्ठानं नित्यकर्म्मसु यथाशक्त्युपदेशस्य क्षतिपाप्याङ्गमात्रविशेषत्वात् कालस्यानुपादेयत्वाच्च तथेति । तदुक्तम् "अङ्गत्वेऽपि च कालस्य न त्यागोऽस्याङ्गवत् कृतः । अनुपादेयरूपत्वात् काले कर्म्म-

विधीयते"॥ वचनात् कालातिपत्तौ केषाञ्चित् प्रायश्चित्तं कृत्वाऽनुष्ठानं यथा सन्ध्यावन्दनादीनां तद्यथा शांख्यायनगृह्यम्। "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदिग्भमानच्चत्रदर्शनात् अतिक्रान्तायां महाव्याहृतीः सावित्रीः स्वस्त्ययनादि जपित्वा एवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात्" इति। उत्तरापराभिमुखो वायुकोणाभिमुखः कोण विदिशोति अन्वष्टमदिग्भमिति उभयदिगष्टमभागमिति यावत्। व्यासः। "सन्ध्याकाले व्यतीते तु न च सन्ध्यां समाचरेत्। गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समाचरेत्"॥ अपि स्मृतिः। "कालोत्तमौ करौ प्रातः सायमधो मुखौ करौ। मध्ये तिर्य्यक्करौ प्रोक्तौ जप एवं मुदाहृतः"। पितृदयितायामप्येवम्। यत्तु कार्म्मोपखण्डम्। "विधिनापि कृता सन्ध्या कालातीता वृथा भवेत्। अयमेव हि दृष्टान्तो वन्ध्या स्त्री मैथुनं यथा"। इति तदकृतप्रायश्चित्तपरम्। हरिहरपद्धतौ। "यद्वाग्निक्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राशनकर्म्मणि"। यद्वेति पचान्तरं प्राशनकार्य्ये मध्यकालवत् अग्निक्रियामुख्यकालस्यापि गौणकालत्वं तेन सायं सन्ध्याया रात्रिः प्रातःसन्ध्याकालश्च गौणकाल इत्यर्थः। एवमन्यत्रापि। अतएव छन्दोगपरिशिष्टम्। "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्व्वीत ये तूपनयनादधः"। एतदिति महाव्याहृतिहोमादिप्रायश्चित्तम्। अधः पूर्व्वम्। हरद्राजमार्त्तण्डे। "या नार्य्यकृतसीमन्ता प्रसूते च कदाचन। अङ्के निधाय तं बालं पुनः संस्कारमर्हति"॥ देवलः। "सकृच्च संस्कृता नारी सर्व्वगर्भेषु संस्कृता। यं यं गर्भं प्रसूयेत स गर्भः संस्कृतो भवेत्"॥ संस्कारकृतनियमसाह नारदः। "येषान्त

